सर्गाँ इव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता ।
सजोषसा उषसा सूर्येण चाऽश्विना तिरोअह्न्यम् २०
रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता ।
सजोषसा उषसा सूर्येण चाऽश्विना तिरोअह्न्यम् २१
अर्वाग् रथं नि यच्छतं पिबतं सोम्यं मधु ।
आ यातमश्विना गत मवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे २२ ५३०
नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये ।
आ यातमश्विना गत मवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे २३
स्वाहाकृतस्य तृम्पतं सुतस्य देवावन्धसः ।
आ यातमश्विना गत मवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे २४ ५३२

॥ ५५ ॥ ( ऋ. ८।४२।४-६ )

( ५३३-५३५ ) नाभाकः काण्वः, अर्चनाना आत्रेयो वा । अनुष्टुप्।

आ वां ग्रावाणो अश्विना धीभिर्विप्रा अचुच्यवुः ।
नासत्या सोमपीतये नभन्तामन्यके समे ४
यथा वामत्रिरश्विना गीर्भिर्विप्रो अजोहवीत् ।
नासत्या सोमपीतये नभन्तामन्यके समे ५
एवा वामह्व ऊतये यथाहुवन्त मेधिराः ।
नासत्या सोमपीतये नभन्तामन्यके समे ६ ५३५

॥ ५६ ॥ ( ऋ. ८।५७। [ ९ वाल० ] १-४ )

( ५३६-५३९ ) मेध्यः काण्वः। त्रिष्टुप्।

युवं देवा ऋतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा ।
आगच्छतं नासत्या शचीभि रिदं तृतीयं सवनं पिबाथः १
युवां देवास्त्रय एकादशासः सत्याः सत्यस्य ददृशे पुरस्तात् ।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी २
पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत् ताँ उप याता पिबध्यै ३
अयं वां भागो निहितो यजत्रा मा गिरो नासत्योप यातम् ।
पिबतं सोमं मधुमन्तमस्मे प्र दाश्वांसमवतं शचीभिः ४ ५३९

॥ ५७ ॥ ( ऋ. ८।७३।१-१८ )
( ५४०-५५७ ) गोपवन आत्रेयः सप्तवध्रिर्वा । गायत्री ।

उदीराथामृतायते युञ्जाथामश्विना रथम् । अन्ति षद्भूतु वामवः १ ५४०
निमिषश्चिज्जवीयसा रथेना यातमश्विना । अन्ति षद्भूतु वामवः २
उप स्तृणीतमत्रये हिमेन घर्ममश्विना । अन्ति षद्भूतु वामवः ३
कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः । अन्ति षद्भूतु वामवः ४
यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम् । अन्ति षद्भूतु वामवः ५
अश्विना यामहूतमा नेदिष्ठं याम्याप्यम् । अन्ति षद्भूतु वामवः ६ ५४५
अवन्तमत्रये गृहं कृणुतं युवमश्विना । अन्ति षद्भूतु वामवः ७
वरेथे अग्निमातपो वदते वल्ग्वत्रये । अन्ति षद्भूतु वामवः ८
प्र सप्तवध्रिराशसा धारामग्नेरशायत । अन्ति षद्भूतु वामवः ९
इहा गतं वृषण्वसू शृणुतं म इमं हवम् । अन्ति षद्भूतु वामवः १०
किमिदं वां पुराणवज्जरतोरिव शस्यते । अन्ति षद्भूतु वामवः ११ ५५०
समानं वां सजात्यं समानो बन्धुरश्विना । अन्ति षद्भूतु वामवः १२
यो वां रजांस्यश्विना रथो वियाति रोदसी । अन्ति षद्भूतु वामवः १३
आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् । अन्ति षद्भूतु वामवः १४
मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् । अन्ति षद्भूतु वामवः १५
अरुणप्सुरुषा अभूदकर्ज्योतिर्ऋतावरी । अन्ति षद्भूतु वामवः १६ ५५५
अश्विना सु विचाकशद्वृक्षं परशुमाँ इव । अन्ति षद्भूतु वामवः १७
पुरं न धृष्णवा रुज कृष्णया बाधितो विशा । अन्ति षद्भूतु वामवः १८ ५५७

॥ ५८ ॥ ( ऋ. ८।८५।१-९ )
( ५५८-५६६ ) कृष्ण आङ्गिरसः । गायत्री ।

आ मे हवं नासत्याऽश्विना गच्छतं युवम् । मध्वः सोमस्य पीतये १
इमं मे स्तोममश्विनेमं मे शृणुतं हवम् । मध्वः सोमस्य पीतये २
अयं वां कृष्णो अश्विना हवते वाजिनीवसू । मध्वः सोमस्य पीतये ३ ५६०
शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा । मध्वः सोमस्य पीतये ४
छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा । मध्वः सोमस्य पीतये ५
गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना । मध्वः सोमस्य पीतये ६ ५६३

युञ्जार्थां रासभं रथे वीड्वङ्गे वृषण्वसू । मध्वः सोमस्य पीतये ७
त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना । मध्वः सोमस्य पीतये ८
नू मे गिरो नासत्या ऽश्विना प्रावतं युवम् । मध्वः सोमस्य पीतये ९ ५६६

॥ ५९ ॥ ( ऋ. ८।८६।१-५ )

( ५६७-५७१ ) कृष्ण आङ्गिरसः, विश्वको वा कार्ष्णिः । जगती ।

उभा हि दस्रा भिषजा मयोभुवो—भा दक्षस्य वचसो बभूवथुः ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् १
कथा नूनं वां विमना उप स्तव—द्युवं धियं ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् २
युवं हि ष्मा पुरुभुजेममेधतुं विष्णाप्वे ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ३
उत त्यं वीरं धनसामृजीषिणं दूरे चित् सन्तमवसे हवामहे ।
यस्य स्वादिष्ठा सुमतिः पितुर्यथा मा नो वि यौष्टं सख्या मुमोचतम् ४
ऋतेन देवः सविता शमायत ऋतस्य शृङ्गमुर्विया वि पप्रथे ।
ऋतं सासाह महि चित् पृतन्यतो मा नो वि यौष्टं सख्या मुमोचतम् ५ ५७१

॥ ६० ॥ ( ऋ. ८।८७।१-६ )

( ५७२-५७७ ) कृष्ण आङ्गिरसो वासिष्ठो वा द्युम्नीकः, प्रियमेध आङ्गिरसो वा ।
प्रगाथः = ( विषमा बृहती+समा सतोबृहती )

द्युम्नी वां स्तोमो अश्विना क्रिविर्न सेक आ गतम् ।
मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे १
पिबतं घर्मं मधुमन्तमश्विना ऽऽ बर्हिः सीदतं नरा ।
ता मन्दसाना मनुषो दुरोण आ नि पातं वेदसा वयः २
आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।
ता वर्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु ३
पिबतं सोमं मधुमन्तमश्विना ऽऽ बर्हिः सीदतं सुमत् ।
ता वावृधाना उप सुष्टुतिं दिवो गन्तं गौराविवेरिणम् ४
आ नूनं यातमश्विना ऽश्वेभिः प्रुषितप्सुभिः ।
दस्रा हिरण्यवर्तनी शुभस्पती पातं सोममृतावृधा ५ ५७६

वयं हि वां हवामहे विपन्यवो विप्रासो वाजसातये ।
ता वल्गू दस्रा पुरुदंससा धिया ऽश्विना श्रुष्टया गतम् ६ ५७७

॥ ६१ ॥ ( ऋ. ८।१०१।७-८ )

( ५७८-५७९ ) जमदग्निर्भार्गवः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती )।

आ मे वचांस्युद्यता द्युमत्तमानि कर्त्वा ।
उभा यातं नासत्या सजोषसा प्रति हव्यानि वीतये ७
रातिं यद् वामरक्षसं हवामहे युवाभ्यां वाजिनीवसू ।
प्राचीं होत्रां प्रतिरन्तावितं नरा गृणाना जमदग्निना ८ ५७९

॥ ६२ ॥ ( ऋ. १०।२४।४-६ )

( ५८०-५८२ ) ऐन्द्रो विमदः, प्राजापत्यो वा, वासुक्रो वसुकृद्वा । अनुष्टुप् ।

युवं शक्रा मायाविना समीची निरमन्थतम् ।
विमदेन यदीळिता नासत्या निरमन्थतम् ४
विश्वे देवा अकृपन्त समीच्योर्निष्पतन्त्योः ।
नासत्यावब्रुवन् देवाः पुनरा वहतादिति ५
मधुमन्मे परायणं मधुमत् पुनरायनम् ।
ता नो देवा देवतया युवं मधुमतस्कृतम् ६ ५८२

॥ ६३ ॥ ( ऋ. १०।३९।१-१४ )

( ५८३-६१० ) काक्षीवती घोषा । जगती, १४ त्रिष्टुप् ।

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता ।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे १
चोदयतं सूनृताः पिन्वतं धिय उत् पुरंधीरीरयतं तदुश्मसि ।
यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम् २
अमाजुरश्चिद् भवथो युवं भगो ऽनाशोश्चिदवितारापमस्य चित् ।
अन्धस्य चिन्नासत्या कृशस्य चिद् युवामिदाहुर्भिषजा रुतस्य चित् ३ ५८५
युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ४
पुराणा वां वीर्या प्र ब्रवा जने ऽथो हासथुर्भिषजा मयोभुवा ।
ता वां नु नव्याववसे करामहे ऽयं नासत्या श्रदरिर्यथा दधत् ५ ५८७

इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतम् ।
अनापिरज्ञा असजात्यामतिः पुरा तस्या अभिशस्तेरव स्पृतम् ६
युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम् ।
युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये ७
युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद् वयः ।
युवं वन्दनमृश्यदादुदूपथु—र्युवं सद्यो विश्पलामेतवे कृथः ८ ५९०
युवं ह रेभं वृषणा गुहा हित—मुदैरयतं ममृवांसमश्विना ।
युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये ९
युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनम् ।
चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् १०
न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयम् ।
यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ११
आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः १२
ता वर्तिर्यातं जयुषा वि पर्वत—मपिन्वतं शयवे धेनुमश्विना ।
वृकस्य चिद् वर्तिकामन्तरास्याद् युवं शचीभिर्ग्रसितामसुञ्चतम् १३ ५९५
एतं वां स्तोममश्विनावकर्मा—तक्षाम भृगवो न रथम् ।
न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः १४

॥ ६४ ॥ ( ऋ. १०।४०।१-१४ )

रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुवितार्य भूषति ।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि १
कुह स्विद् दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ २
प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता गच्छथो गृहम् ।
कस्य ध्वस्रा भवथः कस्य वा नरा राजपुत्रेव सवनाव गच्छथः ३
युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे ।
युवं होत्रामृतुथा जुह्वते नरे—षं जनाय वहथः शुभस्पती ४ ६००

युवां ह॒ घोषा॒ पर्य॑श्विना य॒ती राज्ञ॑ ऊचे दु॒हि॒ता पृ॒च्छे वां॑ नरा ।
भू॒तं मे॒ अह्न॑ उ॒त भू॒तम॒क्तवे॑ ऽश्वाव॑ते र॒थिने॑ शक्त॒मर्व॑ते ५
यु॒वं क॒वी ष्ठः पर्य॑श्विना॒ रथं॒ विशो॒ न कुत्सो॑ जरि॒तुर्न॑शायथः ।
यु॒वोर्ह॒ मक्षा॒ पर्य॑श्विना॒ मध्वा॒—सा भ॑रत निष्कृ॒तं न योष॑णा ६
यु॒वं ह॑ भु॒ज्युं यु॒वम॑श्विना॒ वशं॑ यु॒वं शि॒ञ्जार॑मु॒शना॒मुपा॑रथुः ।
यु॒वो ररा॑वा॒ परि॑ स॒ख्यमा॑सते यु॒वोर॒हमव॑सा सु॒म्नमा च॑के ७
यु॒वं ह॑ कृ॒शं यु॒वम॑श्विना श॒युं यु॒वं वि॒धन्तं॑ वि॒धवा॑मुरुष्यथः ।
यु॒वं स॒निभ्यः॑ स्त॒नय॑न्तमश्विना॒ ऽप॑ व्र॒जमू॑र्णुथः स॒प्तास्य॑म् ८
जनि॑ष्ट॒ योषा॑ प॒तय॑त् क॒नीन॒को वि चारु॑ह॒न् वी॒रुधो॑ दं॒सना॒ अनु॑ ।
आस्मै॑ रीयन्ते निव॒नेव॒ सिन्ध॑वो॒ ऽस्मा अह्ने॑ भवति॒ तत् प॑ति॒त्वन॑म् ९ ६०५
जी॒वं रु॑दन्ति॒ वि म॑यन्ते अध्व॒रे दी॒र्घामनु॒ प्रसि॑तिं दीधियु॒र्नरः॑ ।
वा॒मं पि॒तृभ्यो॒ य इ॒दं स॑मेरि॒रे मयः॒ पति॑भ्यो॒ जन॑यः परि॒ष्वजे॑ १०
न तस्य॑ वि॒द्म तदु॒ षु प्र वो॑चत॒ युवा॑ ह॒ यद् यु॑व॒त्याः क्षेति॒ योनि॑षु ।
प्रि॒योस्रि॑यस्य वृष॒भस्य॑ रे॒तिनो॑ गृ॒हं ग॑मेमाश्विना॒ तदु॑श्मसि ११
आ वा॑मगन्त्सुम॒तिर्वा॑जिनीवसू॒ न्य॑श्विना हृ॒त्सु कामा॑ अयंसत ।
अभू॑तं॒ गोपा॑ मिथु॒ना शु॑भस्पती प्रि॒या अ॑र्य॒म्णो दुर्याँ॑ अशीमहि १२
ता म॑न्दसा॒ना मनु॑षो दुरो॒ण आ ध॒त्तं र॒यिं स॒हवी॑रं वच॒स्यवे॑ ।
कृ॒तं ती॒र्थं सु॑प्रपा॒णं शु॑भस्पती स्था॒णुं प॑थे॒ष्ठामप॑ दुर्म॒तिं ह॑तम् १३
क्व॑ स्विद॒द्य क॑त॒मास्व॒श्विना॑ वि॒क्षु द॒स्रा मा॑दयेते शुभस्पती॑ ।
क ईं॒ नि ये॑मे कत॒मस्य॑ जग्मतु॒—र्विप्र॑स्य वा॒ यज॑मानस्य वा गृ॒हम् १४ ६१०

॥ ६५ ॥ ( ऋ. १०।४१।१-३ )

( ऋ. ६११-६१३ ) सुहस्त्यो घौषेयः। जगती।

स॒मा॒नमु॒ त्यं पु॑रुहू॒तमु॒क्थ्यं१॑ रथं॑ त्रिच॒क्रं सव॑ना॒ गनि॑ग्मतम् ।
परि॑ज्मानं विद॒थ्यं॑ सुवृ॒क्तिभि॒—र्व॒यं व्यु॑ष्टा उ॒षसो॑ हवामहे १
प्रा॒त॒र्युजं॑ नास॒त्याधि॑ तिष्ठथः प्रात॒र्यावा॑णं मधु॒वाह॑नं॒ रथ॑म् ।
वि॒शो॒ येन॒ गच्छ॑थो॒ यज्व॑रीर्नरा की॒रेश्चि॑द् य॒ज्ञं होतृ॑मन्तमश्विना २
अ॒ध्व॒र्युं वा॒ मधु॑पाणिं सु॒हस्त्य॑—म॒ग्निधं॑ वा धृ॒तद॑क्षं॒ दमू॑नसम् ।
विप्र॑स्य वा॒ यत् सव॑नानि॒ गच्छ॑थो॒ ऽत॒ आ या॑तं मधु॒पेय॑माश्विना ३ ६१३

॥ ६६ ॥ ( ऋ. १०।१०६।१-११ )

( ६१४-६२४ ) भूतांशः काश्यपः । त्रिष्टुप् ।

उभा उ नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव ।
सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे १
उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव श्वात्र्या शासुरेथः ।
दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महिषेवावपानात् २ ६१५
साकंयुजा शकुनस्येव पक्षा पश्वेव चित्रा यजुरा गमिष्टम् ।
अग्निरिव देवयोर्दीदिवांसा परिज्मानेव यजथः पुरुत्रा ३
आपी वो अस्मे पितरेव पुत्रोग्रेव रुचा नृपतीव तुर्यै ।
इर्येव पुष्ट्यै किरणेव भुज्यै श्रुष्टीवानेव हवमा गमिष्टम् ४
वंसगेव पूषर्या शिम्बाता मित्रेव ऋता शतरा शातपन्ता ।
वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या३ पुरीषा ५
सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ६
पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।
ऋभू नापत् खरमज्रा खरज्रुर्वायुर्न पर्फरत् क्षयद् रयीणाम् ७ ६२०
घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ् मनऋङ्गा मनन्या३ न जग्मी ८
बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ९
आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे ।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात् सचेथे १०
ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ११ ६२४

॥ ६७ ॥ ( ऋ. १०।१३१।४-५ )

( ६२५-६२६ ) सुकीर्तिः काक्षीवतः । ४ अनुष्टुप्, ५ त्रिष्टुप् ।

युवं सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ४ ६२५

पुत्रमिव पितरावश्विनोभे न्द्रावथुः काव्यैर्दंसनाभिः ।
यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ५ ६२६

॥ ६८ ॥ ( ऋ. १०।१४३।१-६ )

( ६२७-६३२ ) अत्रिः सांख्यः । अनुष्टुप् ।

त्यं चिदत्रिमृतजुर मर्थमश्वं न यातवे ।
कक्षीवन्तं यदी पुना रथं न कृणुथो नवम् १
त्यं चिदश्वं न वाजिन मरेणवो यमत्नत ।
दृळ्हं ग्रन्थिं न वि ष्यत मत्रिं यविष्ठमा रजः २
नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः ।
अथा हि वां दिवो नरा पुनः स्तोमो न विशसे ३
चिते तद् वां सुराधसा रातिः सुमतिरश्विना ।
आ यन्नः सदने पृथौ समने पर्षथो नरा ४ ६३०
युवं भुज्युं समुद्र आ रजसः पार ईङ्खितम् ।
यातमच्छा पतत्रिभि र्नासत्या सातये कृतम् ५
आ वां सुम्नैः शंयू इव मंहिष्ठा विश्ववेदसा ।
समस्मे भूषतं नरो त्सं न पिप्युषीरिषः ६ ६३१

॥ ६९ ॥ ( ऋ. १०।१८४।३ )

( ६३३ ) त्वष्टा गर्भकर्ता, विष्णुर्वा प्राजापत्यः । अनुष्टुप् ।

हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ३ ६३३

॥ ७० ॥ ( ६३४-६३८ ) ( वा. य. १४।१-५ )

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया ।
उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा १
कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू
सादयतामिह त्वा २ ६३५

स्वैर्दक्षैर्दक्षपितेह सीद देवानांᳪ सुम्ने बृहते रणाय ।
पितेवैधि सूनवऽआ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ३
पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वेऽअभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा ४
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानाम् ।
ऊर्मिर्द्रप्सोऽअपामसि विश्वकर्मा तऽऋषिरश्विनाध्वर्यू सादयतामिह त्वा ५

॥ ७१ ॥ ( ६३९-६४० ) ( वा. य. ३८।१०,१३ )

विश्वाऽआशा दक्षिणसद् विश्वान् देवानयाडिह ।
स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना १०
अपातामश्विना घर्ममनु द्यावापृथिवीऽअमᳪसाताम् ।
इहैव रातयः सन्तु १३

॥ ७२ ॥ ( साम० ३०५ )

( ६४१ ) आश्विनौ वैवस्वतौ । बृहती ।

कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्मया क्षयमाणोऽंशुनेत्थमु आद्वन्यथा ३

॥ ७३ ॥ ( अथर्व ११२९।६ )

( ६४२-६४५ ) अथर्वा । त्रिष्टुप् ।

शिवाभिष्टे हृदयं तर्पयाम्य—नमीवो मोदिषीष्ठाः सुवर्चाः ।
सवासिनौ पिबतां मन्थमेत—मश्विनो रूपं परिधाय मायाम् ६

॥ ७४ ॥ ( अथर्व० ६।५०।१-३ )

अथर्वा ( अभयकामः ) । १ विराड् जगती, १-३ पथ्यापङ्क्तिः ।

हतं तर्दं समङ्कमाखुमश्विना छिन्तं शिरो अपि पृष्टीः शृणीतम् ।
यवान्नेददानपि नह्यतं मुखमथाभयं कृणुतं धान्याय १
तर्द है पतङ्ग है जभ्य हा उपक्वस ।
ब्रह्मेवासंस्थितं हविरनदन्त इमान्यवानहिंसन्तो अपोदित २

तदींपते वघांपते तृष्टंजम्भा आ शृंणोत मे ।
य आंरण्या व्यद्वरा ये के च स्थ व्यद्वरास्तान्त्सर्वान् जम्भयामसि ३ ६४५

॥ ७५ ॥ ( अथर्व० २।३०।२ )

( ६४६ ) प्रजापतिः । अनुष्टुप् ।

सं चेन्नयांथो अश्विना कामिना सं च वक्षंथः ।
सं वां भगांसो अग्मत सं चित्तानि समु व्रता २ ६४६

॥ ७६ ॥ ( अथर्व० ६।१०२।१-३

( ६४७-६४९ जदग्निः । अनुष्टुप् )

यथायं वाहो अंश्विना समैति सं च वर्तते । एवा मामभि ते मनः समैतु सं चं वर्तताम् १
आहं खिदामि ते मनों राजाश्वः पृष्ट्यामिव । रेष्माच्छिन्नं यथा तृणं मयिं ते वेष्टतां मनः २
आञ्जनस्य मदुघंस्य कुष्ठंस्य नलंदस्य च । तुरो भगंस्य हस्तांभ्यामनुरोधंनमुद्भरे ३ ६४९

॥ ७७ ॥ ( अथर्व० ६।१४१।१-३ )

( ६५०-६५२ ) विश्वामित्रः । अनुष्टुप् ।

वायुरेनाः समाकंरत् त्वष्टा पोषांय ध्रियताम् । इन्द्र आभ्यो अधि ब्रवद् रुद्रो भूम्ने चिंकित्सतु १
लोहिंतेन स्वधिंतिना मिथुनं कर्णयोः कृधि । अकर्तामश्विना लक्ष्म तदंस्तु प्रजयां बहु २
यथा चक्रुर्देवासुरा यथा मनुष्या उत । एवा संहस्रपोषायं कृणुतं लक्ष्मांश्विना ३ ६५२

अश्विसहचारी-देवगणः ।

## (१) अश्विसरस्वतीन्द्राः ।

+ ॥ ७८ ॥ ( ६५३-६६९ ) ( वा य. १९।३३-३५ )

यस्ते रसः सम्भृंतऽओषंधीषु सोमंस्य शुष्मः सुरंया सुतस्यं ।
तेनं जिन्व यजंमानं मदेंन सरंस्वतीमश्विनाविन्द्रंमग्निम् ३३
यमश्विना नमुंचेरासुरादधि सरंस्वत्यसुनोदिन्द्रियायं ।
इमं तꣳ शुक्रं मधुंमन्तमिन्दुꣳ सोमꣳ राजांनमिह भंक्षयामि ३४
यदत्रं रिप्तꣳ रसिनंः सुतस्य यदिन्द्रोऽअपिंबच्छचींभिः ।
अहं तदंस्य मनंसा शिवेन सोमꣳ राजांनमिह भंक्षयामि ३५ ६५५

+ वा० य० २०।५५-६६; २१।२९-४०। दै० [ अग्निः ] २०२५-२०३६; २०४८-२०५९
वा० य० १९।३२,८०-५९; २०।७३-७७,८०,९०। दै० [ इन्द्रः ] १९३७-१९५३; १९५७-१९६३।

॥ ७९ ॥ ( वा. य. २०।६७-६९ )

अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ६७
यमश्विना सरस्वती हविषेन्द्रमवर्धयन् ।
स बिभेद वलं मघं नमुचावासुरे सचा ६८
तमिन्द्रं पशवः सचाश्विनोभा सरस्वती ।
दधाना ऽअभ्यनूषत हविषा यज्ञ ऽइन्द्रियैः ६९

॥ ८० ॥ ( वा. य. २१।४८-५८ )

देवं बर्हिः सरस्वती सुदेवमिन्द्रे ऽअश्विना ।
तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ४८
देवीर्द्वारो ऽअश्विना भिषजेन्द्रे सरस्वती ।
प्राणं न वीर्यं नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ४९
देवी ऽउषासावश्विना सुत्रामेन्द्रे सरस्वती ।
बलं न वाचमास्य ऽउषाभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ५०
देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्धयन् ।
श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ५१
देवी ऽऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना भिषजावतः ।
शुक्रं न ज्योति स्तनयोराहुती धत्त ऽइन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ५२
देवा देवानां भिषजा होताराविन्द्रमश्विना ।
वषट्कारैः सरस्वती त्विषिं न हृदये मतिꣳ होतृभ्यां दधुरिन्द्रियं
वसुवने वसुधेयस्य व्यन्तु यज ५३
देवीस्तिस्रस्तिस्रो देवीरश्विनेडा सरस्वती ।
शूषं न मध्ये नाभ्यामिन्द्राय दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ५४
देव ऽइन्द्रो नराशꣳसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः ।
रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ५५
देवो देवैर्वनस्पतिर्हिरण्यपर्णो ऽअश्विभ्याꣳ सरस्वत्या सुपिप्पल ऽइन्द्राय पच्यते मधु ।
ओजो न जूतिर्ऋषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि
वसुवने वसुधेयस्य व्यन्तु यज ५६

देवं ब॒र्हिर्वारि॑तीनामध्व॒रे स्ती॒र्णम॒श्विभ्या॒मूर्ण॑म्रदाः सर॑स्वत्या स्यो॒नमि॑न्द्र ते॒ सदः॑ ।
ई॒शायै॑ म॒न्युꣳ राजा॑नं ब॒र्हिषा॑ दधुरिन्द्रि॒यं व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ५७
दे॒वोऽअ॒ग्निः स्वि॑ष्ट॒कृद्दे॒वान् य॑क्षद्य॒थाय॒थꣳ होता॑रा॒विन्द्र॑म॒श्विना॑ वा॒चा वा॒चꣳ सर॑स्वती-
म॒ग्निꣳ सोम॑ꣳ स्विष्ट॒कृत् स्वि॑ष्ट॒ऽइन्द्रः॑ सु॒त्रामा॑ स॒विता वरु॑णो भि॒षगि॒ष्टो दे॒वो व॒नस्प॑तिः॒ स्वि॒ष्टा
दे॒वाऽआ॑ज्य॒पाः स्वि॑ष्टोऽअ॒ग्निर॒ग्निना॒ होता॑ हो॒त्रे स्वि॑ष्ट॒कृद्य॒शो॒ न दध॑दिन्द्रि॒यमू॒र्ज॒मप॑चितिꣳ
स्व॒धां व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ५८ ६६९

## ( २ ) अश्विसूर्यादयः ।

॥ ८१ ॥ ( वा० य० ३८।१२ )

अ॒श्विना॑ घ॒र्मं पा॑त॒ꣳ हार्द्वा॑न॒मह॑र्दि॒वाभि॑रू॒तिभिः॑ ।
त॒न्त्रा॒यिणे॒ नमो॒ द्यावा॑पृथि॒वीभ्या॑म् १२ ६७०

## ( ३ ) अश्विनौ, बृहस्पतिः ।

॥ ८२ ॥ ( अथर्व० ५।२६।१२ )

( ६७१ ) ब्रह्मा । परातिशक्वरी चतुष्पदा गायत्री ।

अश्वि॒ना ब्रह्म॒णा या॑तम॒र्वाञ्चौ॑ वषट्का॒रेण॑ य॒ज्ञं व॒र्धय॑न्तौ ।
बृह॑स्पते॒ ब्रह्म॒णा या॒ह्यर्वाङ् य॒ज्ञो अ॒यं स्व॒रि॒दं यज॑माना॒य स्वाहा॑ १२ ६७१

## ( ४ ) श्येनः, अश्विनौ ।

॥ ८३ ॥ ( अथर्व० ३।३।४ )

( ६७२-६८८ ) अथर्वा । त्रिष्टुप् ।

श्ये॒नो ह॒व्यं न॑य॒त्वा पर॑स्मा॒दन्यक्षे॒त्रे अप॑रुद्धं॒ चर॑न्तम् ।
अ॒श्विना॒ पन्था॑ं कृणुतां सु॒गं त॑ इ॒मं स॑जाता अभि॒संवि॑शध्वम् ४

## ( ५ ) अश्विनौ, द्यौष्पिता ।

॥ ८४ ॥ ( अथर्व० ६।४।३ ) त्रिपदा विराड् गायत्री ।

धि॒ये सम॑श्विना॒ प्राव॑तं न उरु॒ष्या ण॑ उरुज्म॒न्नप्र॑युच्छन् ।
द्यौ३ष्पित॑र्या॒वय॑ दु॒च्छुना॒ या ५ ६७३

## ( ६ ) बृहस्पतिः, अश्विनौ ।

॥ ८५ ॥ ( अथर्व० ६।६९।१-३ ) अनुष्टुप् ।

गिरावरगराटेषु हिरण्ये गोषु यद्यशः । सुरायां सिच्यमानायां कीलाले मधु तन्मयि १
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती । यथा भर्गस्वतीं वाचमावदानि जनाँ अनु २ ६७५
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः । तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ३

## (७) सांमनस्यं, अश्विनौ ।

॥ ८६ ॥ ( अथर्व० ७।५२।१-२ ) १ ककुम्मत्यनुष्टुप्, २ जगती ।

संज्ञानं नः स्वेभिः संज्ञानमरणेभिः ।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् १
सं जानामहै मनसा सं चिकित्वा मा युष्महि मनसा दैव्येन ।
मा घोषा उत्स्थुर्बहुले विनिर्हते मेषुः पप्तदिन्द्रस्याहन्यागते २

## (८) घर्मः, अश्विनौ ।

॥ ८७ ॥ ( अथर्व० ७।७३।१-५,८ ) १,४ जगती, २ पथ्याबृहती, ३,५,८ त्रिष्टुप् ।

समिद्धो अग्निर्वृषणा रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः १
समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम् ।
दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति वेधसः २ ६८०
स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः ।
तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ३
यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आ गतम् ।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ४
तप्तो वां घर्मो नक्षतु स्वहोता प्र वामध्वर्युश्चरतु पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ५
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसा न्यागन् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ८ ६८४

## ( ९ ) मधु, अश्विनौ ।

॥ ८८ ॥ ( अथर्व० ९।१।११,१६-१७,१९ ) अनुष्टुप्, १७ उपरिष्टाद्विराड् बृहती ।

यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ११ ६८५
यथा मधु मधुकृतः संभरन्ति मधावधि ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् १६
यथा मक्षा इदं मधु न्यञ्जन्ति मधावधि ।
एवा मे अश्विना वर्च—स्तेजो बलमोजश्च ध्रियताम् १७
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती ।
यथा वर्चस्वतीं वाच—मावदानि जनाँ अनु १९ ६८८

## ( १० ) सिनीवालीसरस्वत्यश्विनः ।

॥ ८९ ॥ ( ऋ. १०।१८४।२ )

( ६८९ ) त्वष्टा गर्भकर्ता, विष्णुर्वा प्राजापत्यः । अनुष्टुप् ।

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवा—वा धत्तां पुष्करस्रजा २ ६८९

# अश्विनौ-देवता-पुनरुक्त-मन्त्रभागाः ।

## ऋग्वेदस्य प्रथमं मण्डलम् ।

[५] १।२२।१ ( मेधातिथिः काण्वः । अश्विनौ )
अश्विनावेह गच्छताम् ।
अस्य सोमस्य पीतये ।
( २८४ ) ५।७५।७ ( अवस्युरात्रेयः । अश्विनौ )
अश्विनावेह गच्छतं ।
( २९७ ) ५।७८।१ ( सप्तवध्रिरात्रेयः । अश्विनौ )
( इन्द्रः ३२१३ ) १।२३।२ ( मेधातिथिः काण्वः । इन्द्रवायू )
—हवामहे ।
अस्य सोमस्य पीतये ।
( इन्द्रः ३३२१ ) ४।४९।५ ( वामदेवो गौतमः । इन्द्राबृहस्पती )
५।७१।३ ( बाहुवृक्त आत्रेयः । मित्रावरुणौ )
अस्य... ।
( इन्द्रः ३०५५ ) ६।५९।१० ( भरद्वाजो बार्हस्पत्यः । इन्द्राग्नी )
अस्य... ।
( इन्द्रः ६३३ ) ८।७६।६ ( कुरुसुतिः काण्वः । इन्द्रः )
अस्य... ।
( मरुतः ४०४-६ ) ८।९४।१०-१२ ( बिन्दुः पूतदक्षो वा आङ्गिरसः । मरुतः )
[६] १।२२।२ ( मेधातिथिः काण्वः । अश्विनौ )
उभा देवा दिविस्पृशा । ...हवामहे ।
( इन्द्रः ३२१३ ) १।२३।२ ( मेधातिथिः काण्वः इन्द्रवायू )
उभा देवा दिविस्पृशेन्द्रवायू हवामहे ।
[७] १।२२।३ तया यज्ञं मिमिक्षतम् ।
( ४१ ) १।४७।४ मध्वा यज्ञं मिमिक्षतम् ।
[१०] १।३०।१८ ( शुनःशेप आजीगर्तिः । अश्विनौ )
समानयोजनो हि वां रथो दस्रावमर्त्यः ।
( २८६ ) ५।७५।९ ( अवस्युरात्रेयः । अश्विनौ )
अयोजि वां वृषण्वसू रथो दस्रावमर्त्यः ।
[११] १।३०।१९ ( शुनःशेप आजीगर्तिः । अश्विनौ )
चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ।
( २६० ) ५।७३।३ ( पौर आत्रेयः । अश्विनौ )
ईर्मान्यद् वपुषे वपुश्चक्रं रथस्य येमथुः ।
पर्यन्याः...दीयथः ।

[२१] १।३४।१० ( हिरण्यस्तूप आङ्गिरसः । अश्विनौ )
मध्वः पिबतं मधुपेभिरासभिः ।
...रथम् ।
( २३६ ) ४।४५।३ ( वामदेवो गौतमः । अश्विनौ )
......आ रजः । —रथम् ।
[२२] १।३४।११ आ नासत्या त्रिभिरेकादशैः ।
( ५११ ) ८।३५।३ ( श्यावाश्व आत्रेयः । अश्विनौ )
विश्वैर्देवैस्त्रिभिरेकादशैः ।
[२२] १।३४।११ ( हिरण्यस्तूप आङ्गिरसः । अश्विनौ )
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ।
( १६६ ) १।१५७।४ ( दीर्घतमा औचथ्यः । अश्विनौ )
[२३] १।३४।१२ ( हिरण्यस्तूप आङ्गिरसः । अश्विनौ )
वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ।
[७५] १।११२।२४ ( कुत्स आङ्गिरसः । अश्विनौ )
अवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ।
[२५] १।३६।२ ( प्रस्कण्वः काण्वः । अश्विनौ )
मनोतरा रयीणाम् ।
( ४३२ ) ८।८।१२ ( सध्वंसः काण्वः । अश्विनौ )
[२६] १।४६।३ ( प्रस्कण्वः काण्वः । अश्विनौ )
यद् वां रथो विभिष्पतात् ।
( ४०५ ) ८।५।२२ ( ब्रह्मातिथिः काण्वः । अश्विनौ )
[३०] १।४६।७ ( प्रस्कण्वः काण्वः । अश्विनौ )
युञ्जाथामश्विना रथम् ।
( ५४० ) ८।७३।१ ( गोपवन आत्रेयः सप्तवध्रिर्वा । अश्विनौ )
[३९] १।४७।१ ( प्रस्कण्वः काण्वः । अश्विनौ )
अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
२।४१।४ ( गृत्समदः शौनकः । मित्रावरुणौ )
अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।
[४०] १।४७।२ ( प्रस्कण्वः काण्वः । अश्विनौ )
रथेना यातमश्विना ।
( ४३१ ) ८।८।११ ( सध्वंसः काण्वः । अश्विनौ )
अतः सहस्रनिर्णिजा रथेना यातमश्विना ।

( ४३४ ) ८।८।१४ ( सध्वंसः काण्वः । अश्विनौ )
अतः— ।
[४१] १।४७।३ ( प्रस्कण्वः काण्वः । अश्विनौ )
**पातं सोममृतावृधा ।**
**—दाश्वांसमुप गच्छतम् ।**
( ४३ ) १।४७।५ ( प्रस्कण्वः काण्वः । अश्विनौ )
पातं— ।
३।६२।१८ ( विश्वामित्रो गाथिनः, जमदग्निर्वा । मित्रावरुणौ )
पातं— ।
७।६६।१९ ( वसिष्ठो मैत्रावरुणिः । मित्रावरुणौ )
पातं— ।
( ५७६ ) ८।८७।५ ( कृष्ण आङ्गिरसो द्युम्नीको वा वासिष्ठः, प्रियमेध आङ्गिरसो वा । अश्विनौ )
पातं— ।
( इन्द्रः ३१२४ ) ४।४६।५ ( वामदेवो गौतमः । इन्द्रवायू )
**दाश्वांसमुप गच्छतम् ।**
[४१;४४] १।४७।३,६ ( प्रस्कण्वः काण्वः । अश्विनौ )
अधाद्य ( ६ सुदासे ) **दस्रा वसु बिभ्रता ।**
[४२] १।४७।४ मध्वा **यज्ञं मिमिक्षतम् ।**
( ७ ) १।२२।३ तया यज्ञं— ।
[४२] १।४७।४ ( प्रस्कण्वः काण्वः । अश्विनौ )
**युवां हवन्ते अश्विना ।**
( ४०० ) ८।५।१७ ब्रह्मातिथिः काण्वः । अश्विनौ )
[४३] १।४७।५ **ताभिः ष्व१स्माँ अवतं शुभस्पती ।**
( इन्द्रः ३२०४ ) ८।५९ ( वाल० ११ ) ।३ ( सुपर्णः काण्वः । इन्द्रावरुणौ )
**ताभिर्दाश्वांसमवतं शुभस्पती ।**
[४५] १।४७।७ ( प्रस्कण्वः काण्वः । अश्विनौ )
**यन्नासत्या परावति यद् वा स्थो अधि तुर्वशे । अतो रथेन** सुवृता न **आ गतं साकं सूर्यस्य रश्मिभिः ॥**
( ४३४ ) ८।८।१४ ( सध्वंसः काण्वः । अश्विनौ )
**यन्नासत्या परावति यद् वा स्थो** अध्यम्बरे । **अतः** सहस्रनिर्णिजा **रथेना** यातमश्विना ।
१।१३७।२ ( परुच्छेपो दैवोदासिः । मित्रावरुणौ )
**साकं सूर्यस्य रश्मिभिः ।**
५।७९।८ ( सत्यश्रवा आत्रेयः । उषाः )
**साकं सूर्यस्य रश्मिभिः ।**
८।१०१।२ ( जमदग्निर्भार्गवः । मित्रावरुणौ )

**साकं सूर्यस्य रश्मिभिः ।**
[४६] १।४७।८ ( प्रस्कण्वः काण्वः । अश्विनौ )
**अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।**
**इषं** पृञ्चन्ता **सुकृते सुदानव आ बर्हिः सीदतं नरा ॥**
( इन्द्रः २४२ ) ८।४।१४ ( देवातिथिः काण्वः । इन्द्रः )
**अर्वाञ्चं** त्वा **सप्तयोऽध्वरश्रियो— ।**
१।९२।३ ( गोतमो राहूगणः । उषाः ]
**इषं** वहन्तीः **सुकृते सुदानवे ।**
( ५७३ ) ८।८७।२ ( कृष्ण आङ्गिरसो द्युम्नीको वा वासिष्ठः, प्रियमेध आङ्गिरसो वा । अश्विनौ )
**आ बर्हिः सीदतं नरा ।**
( ५७५ ) ८।८७।४ ( कृष्ण आङ्गिरसो० ... । अश्विनौ )
**आ बर्हिः सीदतं सुमत् ।**
[४७] १।४७।९ ( प्रस्कण्वः काण्वः । अश्विनौ )
**तेन नासत्या गतं रथेन सूर्यत्वचा ।**
( ४७६ ) ८।२२।५ ( सोभरिः काण्वः । अश्विनौ )
**...तेन नासत्या गतम् ।**
( ४२२ ) ८।८।२ ( सध्वंसः काण्वः । अश्विनौ )
**रथेन सूर्यत्वचा ।**
[४७] १।४७।९ **मध्वः सोमस्य पीतये ।**
( ५५८-५६६ ) ८।८५।१-९ ( कृष्ण आङ्गिरसः । अश्विनौ )
[४९] १।९२।१६ ( गोतमो राहूगणः । अश्विनौ )
**अर्वाग् रथं समनसा नि यच्छतम् ।**
( ३७३ ) ७।७४।२ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )
( ५३० ) ८।३५।२२ ( श्यावाश्व आत्रेयः । अश्विनौ )
**अर्वाग् रथं नि यच्छतं ।**
[५०] १।९२।१७ ( गोतमो राहूगणः । अश्विनौ )
**आ न ऊर्जं वहतमश्विना युवम् ।**
( १६६ ) १।१५७।४ ( दीर्घतमा औचथ्यः । अश्विनौ )
[५१] १।९२।१८ ( गोतमो राहूगणः । अश्विनौ )
**दस्रा हिरण्यवर्तनी ।**
( २७९ ) ५।७५।२ ( अवस्युरात्रेयः । अश्विनौ )
( ३९४ ) ८।५।११ ( ब्रह्मातिथिः काण्वः । अश्विनौ )
( ४११ ) ८।८।१ ( सध्वंसः काण्वः । अश्विनौ )
( ५७६ ) ८।८७।५ ( कृष्ण आङ्गिरसो द्युम्नीको वा वासिष्ठः, प्रियमेध आङ्गिरसो वा । अश्विनौ )
[५१] १।९२।१८ उषर्बुधो **वहन्तु सोमपीतये ।**
( इन्द्रः ११० ) ८।१।२४ ( मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः )

[ ५२-७४ ] १।११२।१-२३ ( कुत्स आङ्गिरसः । अश्विनौ )

ताभिरू षु ऊतिभिरश्विना गतम् ।

[ ५६ ] १।११२।५ ( कुत्स आङ्गिरसः । अश्विनौ )

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।

( १३२ ) १।११८।६ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

उद्वन्दनमैरयतं दंसनाभिरुद् रेभं ।

[ ५९ ] १।११२।८ याभिर्वर्तिकां ग्रसिताममुञ्चतं ।

( ५९५ ) १०।३९।१३ ( काक्षीवती घोषा । अश्विनौ )

वर्तिकाम्...युवं शचीभिर्ग्रसिताममुञ्चतम्।

[ ७१ ] १।११२।२० ( कुत्स आङ्गिरसः । अश्विनौ )

भुज्युं याभिरवथो याभिरध्रिगुम् ।

( ४८१ ) ८।२२।१० ( सोभरिः काण्वः । अश्विनौ )

याभिः पक्थमवथो याभिरध्रिगुम् ।

[७५] १।११२।२४=(१३) १।३४।१२ ( हिरण्यस्तूप आङ्गिरसः । अश्विनौ )

वृधे च नो भवतं वाजसातौ ।

[ ७६ ] १।११२।२५ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।

=( अग्निः २७१ ) १।९४।१६; ( १८७८ ) १।९५।११; ( १८७८ ) १।९६।९; ( १७२६ ) १।९८।३

=( इन्द्रः ९७५ ) १।१००।१९; ( ८२७ ) १।१०१।११; ( ८३८ ) १।१०२।११; ( ८४६ ) १।१०३।८; ( ३०२० ) १।१०८।१३; ( ३०२८ ) १।१०९।८

=१।१०५।१९ ( त्रित आप्त्यः कुत्स आङ्गिरसो वा । विश्वे देवाः )

=१।१०६।७=१।१०७।३ ( कुत्स आङ्गिरसः । विश्वे देवाः )

=१।११०।९=१।१११।५ ( कुत्स आङ्गिरसः । ऋभवः )

=१।११३।२० ( कुत्स आङ्गिरसः । उषाः )

=१।११४।११ ( कुत्स आङ्गिरसः । रुद्रः )

=१।११५।६ ( कुत्स आङ्गिरसः । सूर्यः )

( सोमः ९१४ ) ९।९७।५८ ( कुत्स आङ्गिरसः । सोमः )

[८३] १।११६।७ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

युवं नरा स्तुवते पज्रियाय कक्षीवते ।

कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ।

( १०८ ) १।११७।७ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

युवं नरा स्तुवते कृष्णियाय ।

( १०७ ) १।११७।६ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

तद् वां नरा शंस्यं पज्रियेण कक्षीवता... ।

शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ

असिञ्चतं मधूनाम् ।

[९२] १।११६।१६ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।

तस्मा अक्षी नासत्या विचक्ष आधत्तं ।

( ११८ ) १।११७।१७ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

शतं मेषान् वृक्ये मामहानं तमः...पिता ।

आक्षी ऋज्राश्वे अश्विनावधत्तं...विचक्षे ।

( ११९ ) १।११७।१८ चक्षदान ऋज्राश्वः शतमेकं च मेषान्

[१०३] १।११७।२ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

यो वामश्विना मनसो जवीयान् ।

येन गच्छथः सुकृतो दुरोणं ।

( २०२ ) १।१८३।१ ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )

मनसो यो जवीयान् ।

येनोपयाथः सुकृतो दुरोणं ।

[ १०७ ] १।११७।६=(८३) १।११६।७ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

शतं कुम्भाँ असिञ्चतं मधूनाम् ( ७सुरायाः ) ।

[ १०८ ] १।११७।७=( ८३ ) १।११६।७ युवं नरा स्तुवते कृष्णियाय ( ७ पज्रियाय )

[ ११० ] १।११७।९ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

पेद्व ऊहथुराशुमश्वम् ।

( ३६६ ) ७।७१।५ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )

[ ११८ ] १।११७।१७=( ९१ ) १।११६।१६ शतं मेषान् वृक्ये मामहानं ( १६ चक्षदानम् ) ।

[ १२१ ] १।११७।२० ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ।

( ५८९ ) १०।३९।७ ( काक्षीवति घोषा । अश्विनौ )

युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम् ।

[१२२] १।११७।२१ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ।

( अग्निः १७९९ ) ७।५।६ ( वसिष्ठो मैत्रावरुणिः । वैश्वानरोऽग्निः )

त्वं दस्यूँरोकसो अग्न आज उरु ज्योतिर्जनयन्नार्याय ।

[११४] १।११७।२३ (कक्षीवान् औशिजो दैर्घतमसः । आश्विनौ)
अपत्यसाचं श्रुत्यं रराथाम् ।
(इन्द्रः३२७५) ६।७१।२ (बार्हस्पत्यो भरद्वाजः । इन्द्रासोमौ)
—श्रुत्यं रराथे ।
[११६] १।११७।२५ (कक्षीवान् औशिजो दैर्घतमसः। अश्विनौ)
एतानि वामश्विना वीर्याणि... ।
ब्रह्म कृण्वन्तो...सुवीरासो विदथमा वदेम।
(२२१) २।३९।८ ( गृत्समदः शौनकः । अश्विनौ )
एतानि वामश्विना वर्धनानि ब्रह्म...अक्रन्।
......वदेम विदथे सुवीराः ।
(इन्द्रः ११३६) २।१२।१५ ( गृत्समदः शौनकः । इन्द्रः )
सुवीरासो विदथमा वदेम ।
(सोमः ११४८) ८।४८।१४ (प्रगाथो घौरः काण्वः। सोमः)
सुवीरासो विदथमा वदेम ।
[११७]१।११८।१=१।३५।१०(हिरण्यस्तूप आङ्गिरसः। सविता)
सुमृळीकः स्ववाँ यात्वर्वाङ् ।
[११७] १।११८।१ ( कक्षीवान् औशिजो दैर्घतमसः। अश्विनौ )
यो मर्त्यस्य मनसो जवीयान् त्रिवन्धुरो वृषणा वातरंहाः ।
(२०१) १।१८३।१ ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )
मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।
[११९] १।११८।३ ( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )
प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥
(१२८) ३।५८।३ ( विश्वामित्रो गाथिनः । अश्विनौ )
सुयुग्भिरश्वैः सुवृता रथेन... ।
किमङ्ग वां प्रत्यवर्तिं...अश्विना हवन्ते ॥
[१३०] १।११८।४ ( कक्षीवान् औशिजो दैर्घतमसः। अश्विनौ )
आ वां श्येनासो अश्विना वहन्तु... ।
...अभि प्रयो नासत्या वहन्ति ॥
(३२३) ६।६३।७ ( बार्हस्पत्यो भरद्वाजः । अश्विनौ )
आ वां वयोऽश्वासो वहिष्ठा अभि प्रयो नासत्या वहन्तु ।
[१३१] १।११८।६=(५६) १।११२।५ उद् वन्दनमैरतं दंसनाभिः ( ५ स्वर्दृशे ) ।
[१३५] १।११८।९ ( कक्षीवान् औशिजो दैर्घतमसः। अश्विनौ )
युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विना-
दत्तमश्वम् ।
जोहूत्रमर्यो... ।
(५९२) १०।३९।१० ( काक्षीवती घोषा । अश्विनौ )
युवं श्वेतं पेदवेऽश्विनाश्वं ।
चकृत्यं ददथुः ।
[१६०] १।१३९।३ युवोर्विश्वा अधि श्रियः ।
(इन्द्रः २८१६) ८।९२।२० ( श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः )
यस्मिन् विश्वा अधि श्रियः ।
[१६३] १।१५७।१ ( दीर्घतमा औचथ्यः । अश्विनौ )
आयुक्षातामश्विना यातवे रथं ।
१०।३५।६ ( लुशो धानाकः । विश्वे देवाः )
आयुक्षातामश्विना तूतुजि रथं ।
[१६६] १।१५७।४=(५०) १।९२।१७
आ न ऊर्जं वहतमश्विना युवम् ।
[१६६] १।१५७।५ =( २२ ) १।३४।११
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ।
[१८४] १।१८०।१० ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )
तं वां रथं वयमद्या हुवेम ।
(२५१) ४।४४।१ (पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ)
[१९९] १।१८२।६ ( अगस्त्यो मैत्रावरुणिः। अश्विनौ )
अनारम्भणे तमसि प्रविद्धम् ।
(इन्द्रः ३२८०) ७।१०४।३ (वसिष्ठो मैत्रावरुणिः[रक्षोघ्नं]। इन्द्रासोमौ )
—प्र विध्यतम् ।
[२०१] १।१८३।१=(११७) १।११८।१
त्रिवन्धुरो वृषणा यस्त्रिचक्रः ( १ वातरंहाः )।
[२०४] १।१८३।३ ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )
यो रथो... ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ।
(२११) १।१८४।५ ( अगस्त्यो मैत्रावरुणिः ।अश्विनौ )
यातं वर्तिस्तनयाय त्मने च ।
६।४९।५ ( ऋजिश्वा भारद्वाजः । विश्वे देवाः )
...यो रथो...
येन नरा— ।
[२०५] १।१८३।४ ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )
अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम् ।

(५३९) ८.५७ ( वाल० ९ )।४ ( मेध्यः काण्वः । अश्विनौ )

अयं वां भागो निहितो यजत्रा ।

( २३० ) ३।५८।५ ( विश्वामित्रो गाथिनः । अश्विनौ )

दस्राविमे वां निधयो मधूनाम् ।

[ २०६ ] १।१८३।५ ( अगस्त्यो मैत्रावरुणिः । अश्विनौ )

मे हवं नासत्योप यातम् ।

( ५५; ) ८।८५।१ ( कृष्ण आङ्गिरसः । अश्विनौ )

आ मे हवं नासत्या ।

[२०७] १।१८३।६ = ( २१३ ) १।१८४।६ = (३७३)७।७३।१

अतारिष्म तमसस्पारमस्य ।

१।९२।६ ( गोतमो राहूगणः । उषाः )

अतारिष्म तमसस्पारमस्य ।

[२०७] १।१८३।६=(२१३)१।१८४।६ (अगस्त्यो मैत्रावरुणिः। अश्विनौ )

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम् ॥

( २३० ) ३।५८।५ ( विश्वामित्रो गाथिनः । अश्विनौ )

एह यातं पथिभिर्देवयानैः ।

[ २०९ ] १।१८४।२ अस्मे ऊ षु वृषणा मादयेथाम्।

(अग्निः ७४८ ) ४।१४।४ अस्मिन् यज्ञे वृषणा।

[ २१२ ] १।१८४।५ = ( २०४ ) १।१८३।३

यातं वर्तिस्तनयाय त्मने च ।

६।४९।५ ( ऋजिश्वा भारद्वाजः । विश्वे देवाः)

येन नरा...वर्तिर्याथस्तनयाय... ।

[ २१३ ] १।१८४।६ = ( २०७ ) १।१८३।६

## ऋग्वेदस्य द्वितीयं मण्डलम् ।

[ २२२ ] २।३९।८=( १९६ ) १।११७।२५

एतानि वामश्विना वर्धनानि ( २५ वीर्याणि )।

[ २२४ ] २।४१।८ ( गृत्समदः शौनकः । अश्विनौ )

न यत् परो नान्तर... ।

दुःशंसो मर्त्यो रिपुः ।

( ३१८ ) ६।६३।२ ( भरद्वाजो बार्हस्पत्यः । अश्विनौ)

न यत् परो नान्तरस्तुतुर्यात् ।

८।१८।१४ ( इरिम्बिठिः काण्वः । आदित्याः )

दुःशंसं मर्त्यं रिपुम् ।

## ऋग्वेदस्य तृतीयं मण्डलम् ।

[ २२८ ] ३।५८।३=( १९९ ) १।११८।३

[ २३० ] ३।५८।५=(२०७) १।१८३।६=(२१३)१।१८४।६

( अगस्त्यो मैत्रावरुणिः । अश्विनौ )

[ २३० ] ३।५८।५=( २०५ ) १।१८३।४

[ २३३ ] ३।५८।८ ( गाथिनो विश्वामित्रः । अश्विनौ )

परि द्यावापृथिवी याति सद्यः ।

१।११५।३ ( कुत्स आङ्गिरसः । सूर्यः )

परि द्यावापृथिवी यान्ति सद्यः ।

## ऋग्वेदस्य चतुर्थं मण्डलम् ।

[ २५० ] ४।४३।७=( २५७ ) ४।४४।७

( पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ )

इहेह यद् वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥

[ २५१ ] ४।४४।१=( १८४ ) १।१८०।१०

तं वां रथं वयमद्या हुवेम ।

[ २५४ ] ४।४४।४ ( पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ )

दधथो रत्नं विधते जनाय ।

७।७५।६ ( वसिष्ठो मैत्रावरुणिः । उषाः )

दधाति रत्नं विधते जनाय ।

[ २५५ ] ४।४४।५ हिरण्येन सुवृता रथेन ।

१।३५।२ ( हिरण्यस्तूप आङ्गिरसः । सविता )

[ २५५ ] ४।४४।५ ( पुरुमीळ्हाजमीळ्हौ सौहोत्रौ । अश्विनौ )

—यातं— ।

मा वामन्ये नि यमन् देवयन्तः ।

( ३५२ ) ७।६९।६ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )

...यातम् ।

मा वामन्ये नि यमन् देवयन्तः ।

[ १५६ ] ४।४४।६ नू नो रयिं पुरुवीरं बृहन्तं
( अग्निः ९९१ ) ६।६।७ ( बार्हस्पत्यो भरद्वाजः । वैश्वानरोऽग्निः)
चन्द्रं रयिं— ।
[ १५७ ] ४।४४।७ = ( १५० ) ४।४३।७
[ २३८ ] ४।४५।२ ( वामदेवो गौतमः । अश्विनौ )
उद् वां पृक्षासो मधुमन्त ईरते ।
७।६०।४ ( वसिष्ठो मैत्रावरुणिः । मित्रावरुणौ )
—मधुमन्तो अस्थुः ।
[ १३८ ] ४।४५।२ ( वामदेवो गौतमः अश्विनौ )
रथा अश्वास उषसो व्युष्टिषु ।
( अग्निः ७४८ ) ४।१४।४ ( वामदेवो गौतमः । अग्निः )
—उषसो व्युष्टौ ।
[ १३८ ] ४।४५।२ = ( २४२ ) ४।४५।६
स्व१र्णं शुक्रं तन्वन्त आ रजः ।
[ १३९ ] ४।४५।३ = ( ११ ) १।३४।१०
मध्वः पिबतं मधुपेभिरासभिः ।
[ २४१ ] ४।४५।५ सोमं सुषाव मधुमन्तमद्रिभिः ।
( सोमः १००० ) ९।१०७।१ सुषाव सोममद्रिभिः

# ऋग्वेदस्य पञ्चमं मण्डलम् ।

[ १५८ ] ५।७३।१ ( पौर आत्रेयः । अश्विनौ )
यदन्तरिक्ष आ गतम् ।
( इन्द्रः ९८० ) ८।९७।५ ( रेभः काश्यपः । इन्द्रः )
— आ गहि
[ १५९ ] ५।७३।२ ( पौर आत्रेयः । अश्विनौ )
इह त्या पुरुभूतमा ।
( ४७४ ) ८।२२।३ सौभरिः काण्वः । अश्विनौ )
[ १६० ]५।७३।३=( ११ ) १।३०।१९ चक्रं रथस्य येमथुः ।
[ १६१ ] ५।७३।५ ( पौर आत्रेयः । अश्विनौ )
आ यद् वां सूर्या रथं तिष्ठत् ।
( ४३० ) ८।८।१० ( सध्वंसः काण्वः । अश्विनौ )
आ यद् वां योषणा रथमतिष्ठत् ।
[ १६७ ] ५।७३।१० इमा ब्रह्माणि वर्धना ।
( इन्द्रः ५६९ ) ८।६२।४ (प्रगाथो घौरः काण्वः । इन्द्रः ।
इन्द्र ब्रह्माणि वर्धना ।
[ १७७ ] ५।७४।१० ( पौर आत्रेयः । अश्विनौ )
अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवम् ।
( ५४४ ) ८।७३।५ ( गोपवन आत्रेयः सप्तवध्रिर्वा । अश्विनौ )
यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम् ।
[ १७८-८६ ] ५।७५।१-९ ( अवस्युरात्रेयः । अश्विनौ )
माध्वी मम श्रुतं हवम् ।
[ १७९ ] ५।७५।२=( ५१ ) १।९२।१८= ( ४११ ) ८।८।१
दस्रा हिरण्यवर्तनी ।
[ १८० ] ५।७५।३ ( अवस्युरात्रेयः । अश्विनौ )
आ नो... अश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी ।
( ४११ ) ८।८।१ ( सध्वंसः काण्वः । अश्विनौ )
आ नो...अश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी ।
( ५५८ ) ८।८५।१ ( कृष्ण आङ्गिरसः । अश्विनौ )
आ मे...अश्विना गच्छतं युवम् ।
[ २८४ ] ५।७५।७ =(५) १।२२।१ =( २९७ ) ५।७८।१
अश्विनाविह गच्छतं १।२२।१ गच्छताम् ) ।
[ २८४ ] ५।७५।७ ( अवस्युरात्रेयः । अश्विनौ )
नासत्या मा वि वेनतम् ।
( २९७ ) ५।७८।१ ( सप्तवध्रिरात्रेयः । अश्विनौ )
[ २८६ ] ५।७५।९ =( १० ) १।३०।१८ रथो दस्रावमर्त्यः ।
[ २८९ ] ५।७६।३ मध्यंदिनं उदिता सूर्यस्य ।
५।६९।३ ( उरुचक्रिरात्रेयः । मित्रावरुणौ )
[ २९० ] ५।७६।४ आ नो दिवो बृहतः पर्वतादा ।
५।४३।११ ( भौमोऽत्रिः । विश्वे देवाः )
[ २९१ ] ५।७६।५ = ५।४२।१८ = ५।४३।१७
( भौमोऽत्रिः । विश्वे देवाः )
[ २९६ ] ५।७७।५ = ५।४२।१८ = ( २९१ ) ५।७६।५
[ २९७ ] ५।७८।१ = ( ५ ) १।२२।१= ( २८४ ) ५।७५।७
[,,-२९९ ] ५।७८।१-३ हंसाविव पततमा सुताँ उप ।
[ २९९ ] ५।७८।३ जुषेथां यज्ञमिष्टये ।
५।७२।३ ( बाहुवृक्त आत्रेयः । मित्रावरुणौ )
[ ३०४ ] ५।७८।८ यथा वातो यथा वनम् ।
१०।२३।४ धूनोति वातो यथा वनम् ।

## ऋग्वेदस्य षष्ठं मण्डलम् ।

[ ३०८ ] ६।६२।३ ( बार्हस्पत्यो भरद्वाजः । अश्विनौ )

तां ह त्यद् वर्तिर्यदरध्र...... ।

......परि... ।

( ३१८ ) ६।६३।२ परि ह त्यद् वर्तिर्याथो...यत्... ।

[ ३१० ] ६।६२।५ बभूवतुर्गृणते चित्रराती ।

( ३१६ ) ६।६२।११ दुरो वर्तं गृणते चित्रराती ।

[ ३१८ ] ६।६३।२ = ( २२४ ) २।४१।८ न यत् परो नान्तरः।

[ ३२० ] ६।६३।४ ( बार्हस्पत्यो भरद्वाजः । अश्विनौ )

प्र रातिरेति जूर्णिनी घृताची ।

( अग्निः ६८४ ) ४।६।३ ( वामदेवो गौतमः । अग्निः )

यता सुजूर्णि रातिनी घृताची ।

[ ३२३ ] ६।६३।७ = ( १३० ) १।११८।४

अभि प्रयो नासत्या वहन्तु ( ४ वहन्ति ) ।

[ ३२३ ] ६।६३।७ ( बार्हस्पत्यो भरद्वाजः । अश्विनौ )

—प्र वां रथो मनोजवा जसर्जि ।

( ३४० ) ७।६८।३ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )

...मनोजवा इयर्ति ।

## ऋग्वेदस्य सप्तमं मण्डलम् ।

[ ३३३ ] ७।६७।६ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )

आ वां तोके तनये तूतुजानाः सुरत्नासो

देववीतिं गमेम ।

( इन्द्रः ३१९६ ) ७।८४।५=( इन्द्रः ३२०१ ) ७।८५।५

( वसिष्ठो मैत्रावरुणिः । इन्द्रावरुणौ )

प्रावत् तोके तनये तूतुजाना ।

सुरत्नासो देववीतिं गमेम ।

[ ३३७ ] ७।६७।१०=( ३५४ ) ७।६९।८ ( वसिष्ठो मैत्रावरुणिः। अश्विनौ )

नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विना-

विरावत् ।

धत्तं रत्नानि जरतं च सूरीन् यूयं पात स्वस्तिभिः सदा नः॥

[ ३४० ] ७।६८।३ = ( ३२३ ) ६।६३।७

[ ३४८ ] ७।६९।२ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )

विशो येन गच्छथो देवयन्तीः ।

( ६११ ) १०।४१।२ ( सुहस्त्यो घौषेयः । अश्विनौ )

गच्छथो यज्वरीर्नरा ।

[ ३५१ ] ७।६९।६ = ( २५५ ) ४।४४।५

मा वामन्ये नि यमन् देवयन्तः ।

[ ३५४ ] ७।६९।८=( ३३७ ) ७।६७।१० = (३४६) ७।६८।९ = (३६१) ७।७०।७=(३६७) ७।७१।६ = (३७२,३७७) ७।७२-७३।५ यूयं पात स्वस्तिभिः सदा नः।

( अग्निः ११११ ) ७।१।२०,२५; ( ११३३ ) ७।३-४।१०; (११४८) ७।७-८।७; (११६०) ७।९।६; (११७०) ७।११।५; (११७३) ७।१२-१३।३; (११७६) ७।१४।३; ( १६८२ ) १०।१२२।८ ।

( इन्द्रः ११५० ) ७।१९।११; ( ११६० ) २०।१०; ( ११७० ) २१।१०; ( ११७९ ) २२।९; ( ११८५ ) २३।६; ( ११९१ ) २४।६ ( ११९७ ) २५।६ (२२०२) २६।५; (२२०७) २७।५; (२२११) २८।५; ( २२१७ ) २९।५; ( २२२२ ) ३०।५; ( ३०७८ ) ९३।८; (३१९६) ८४।५; (३२०१) ८५।५; (३२३५) ९०।७; (३२४०) ९१।७; ( ३३२५ ) ९७-९८।१०,७। ( सोमः ८०५ ) ९।९०।६; ( ८५९,८६२ ) ९७।३,६। ( मरुतः ३६९ ) ७।५६।२५; ( ३७६ ) ५७।७; ( ३८१ ) ५८।६। ( विश्वे देवाः ) ७,३४,२५; ३५,१५; ३६,९। ३७, ८; ३९--४१, ७; ४२, ६; ४३, ५। ४८, ४; १०,६५-६६, १५ । ( सविता ७।४५।४ ( रुद्रः ) ७।४६।४। ( आपः ) ७।४७।४। ( आदित्याः ) ७।५१।३। ( द्यावापृथिवी ) ७।५३।३ ( वास्तोष्पतिः ) ७।५४।३; ( मित्रावरुणौ ) ७।६०।१२; ६१,७; ६२-६३, ६; ६४-६५,५। ( उषाः ) ७।७५।८; ७६,७; ७७,६; ७८-७९।५, ८०,३ ( वरुणः ) ७।८६।८; ८७--८८, ७। ( वायुः ) ७।९२।५। ( सरस्वती ) ७।९५।६। ( विष्णुः ) ७।९९--१००।७। ( पर्जन्यः ) ७।१०१।६

[ ३५९ ] ७।७०।५ प्रति प्र यातं वरमा जनाय ।

७।६५।४ ( मैत्रावरुणिर्वसिष्ठः । मित्रावरुणौ )

प्रति वामत्र वरमा जनाय ।

[ ३५९ ] ७।७०।५ अस्मे वामस्तु सुमतिश्चनिष्ठा ।

( मरुतः ३७३ ) ७।५७।४ ( वसिष्ठो मैत्रा० । मरुतः )

[ ३६१ ] ७।७०।७ = ( ३६७ ) ७।७१।६

( वसिष्ठो मैत्रामरुणिः । अश्विनौ )

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम्।

इमा ब्रह्माणि युवयून्यग्मन् यूयं पात स्वस्तिभिः सदा नः॥

( ३७५ ) ७।७३।३ इमां सुवृक्तिं वृषणा जुषेथाम् ।
[ ३६६ ] ७।७१।५ = ( ११० ) १।११७।९
नि पेदव ऊहथुराशुमश्वम् ।
[ ३६७ ] ७।७१।६ = ( ३६१ ) ७।७०।७
[ ३७१ ] ७।७२।४ ऊर्ध्वं भानुं सविता देवो अश्रेद् ।
( अग्निः ६८३ ) ४।६।२ ऊर्ध्वं भानुं सवितेवाश्रेद् ।
( अग्निः ७४१ ) ४।१३।२ ( वामदेवो गौतमः । अग्निः )
( अग्निः ७४६ ) ४।१४।२ ऊर्ध्वं केतुं सविता देवो अश्रेद् ।
[ ३७२ ] ७।७२।५ = ( ३७ ) ७।७।७३।५
( वसिष्ठो मैत्रावरुणिः । अश्विनौ )
आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ।

[ ३७३ ] ७।७३।१ = १।९२।६ = ( २०७ ) १।१८३।६
= ( २१३ ) १।१८४।६
[ ३७५ ] ७।७३।३ = ( ३६१ ) ७।७०।७
[ ३७६ ] ७।७३।४ ( वसिष्ठो मैत्रावरुणिः । अश्विनौ )
मा नो मर्धिष्टमा गतं शिवेन ।
( ३८० ) ७।७४।३ मा नो मर्धिष्टमा गतम् ।
[ ३७७ ] ७।७३।५ = ( ३७२ ) ७।७२।५
[ ३७९ ] ७।७४।२ = ( ४९ ) १।९२।१६
अर्वाग् रथं समनसा नि यच्छतम् ।
[ ३७९ ] ७।७४।२ = ( ४२१ ) ८।८।१ पिबतं सोम्यं मधु ।
( इन्द्रः ३०७० ) ६।६०।१५
( बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी )
[ ३८० ] ७।७४।३ = ( ३७६ ) ७।७३।४

## ऋग्वेदस्याष्टमं मण्डलम् ।

[ ३८५ ] ८।५।२ = ( इन्द्रः ३२२४ ) ४।४६।५
( वामदेवो गौतमः । इन्द्रवायू )
[ ३८७ ] ८।५।४ ब्रह्मातिथिः काण्वः । अश्विनौ )
पुरुमन्द्रा पुरूवसू ।
( ४३२ ) ८।८।१२ ( सध्वंसः काण्वः । अश्विनौ )
[ ३८८ ] ८।५।५ ( ब्रह्मातिथिः काण्वः । आश्विनौ )
गन्तारा दाशुषो गृहम् ।
( इन्द्रः ३३० ) ८।१३।१० ( नारदः काण्वः इन्द्रः )
—गृहं नमस्विनः ।
( ४७४ ) ८।२२।३ ( सोभरिः काण्वः । अश्विनौ )
[ ३८९ ] ८।५।६ घृतैर्गव्यूतिमुक्षतम् ।
३।६२।१६ ( गाथिनो विश्वामित्रः, जमदग्निर्वा। मित्रावरुणौ )
[ ३९० ] ८।५।७ ( ब्रह्मातिथिः काण्वः । आश्विनौ )
आ नः स्तोममुप द्रवत् ।
( ३९० ) ८।४९ ( वाल० १)।५ ( प्रस्कण्वः काण्वः । इन्द्रः )
[ ३९१ ] ८।५।९ उत नो गोमतीरिषः ।
( सोमः ४४१ ) ९।६२।२४ ( जमदग्निर्भार्गवः । पवमानः सोमः )
५।७९।८ ( सत्यश्रवा आत्रेयः । उषाः )
[ ३९४ ] ८।५।११ = ( ५१ ) १।९२।१८ दस्रा हिरण्यवर्तनी ।
[ ३९४ ] ८।५।११ पिबतं सोम्यं मधु ।
( इन्द्रः ३०७० ) ६।६०।१५
( बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी )
*

[ ३९५ ] ८।५।१२ ( ब्रह्मातिथिः काण्वः । अश्विनौ )
छर्दिर्यन्तमदाभ्यम् ।
( ५६२ ) ८।८५।५ ( कृष्ण आङ्गिरसः । अश्विनौ )
[ ३९८ ] ८।५।१५ ( ब्रह्मातिथिः काण्वः । अश्विनौ )
अस्मे आ वहतं रयिं
पुरुक्षुं विश्वधायसम् ।
( मरुतः ५८ ) ८।७।१३ ( पुनर्वत्सः काण्वः । मरुतः )
आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसम् ।
[ ४०० ] ८।५।१७ = ३।५९।९ ( गाथिनो विश्वामित्रः। मित्रः )
[ ४०० ] ८।५।१७ हविष्मन्तो अरंकृतः ।
१।१४।५ ( मेधातिथिः काण्वः । विश्वे देवाः )
[ ४०० ] ८।५।१७ = ( ४२ ) १।४७।४ युवां हवन्ते अश्विना ।
[ ४०१ ] ८।५।१८ = ( इन्द्रः २०८९ ) ६।४५।३०
स्तोमो वाहिष्ठो अन्तमः ।
[ ४०१ ] ८।५।१८ ( ब्रह्मातिथिः काण्वः अश्विनौ )
स्तोमो वाहिष्ठो...।
युवाभ्यां भूत्वश्विना ।
( ५०५ ) ८।२६।१६ ( विश्वमना वैयश्वः व्यश्वो वाङ्गिरसः । अश्विनौ )
वाहिष्ठो......स्तोमो ।
युवाभ्यां भूत्वश्विना ।
[ ४०३ ] ८।५।२० = ( ४१३ ) ८।५।३० तेन नो वाजिनीवसू ।
[ ४०५ ] ८।५।२२ = ( २६ ) १।४६।३३
यद् वां रथो विभिष्पतात् ।

[ ४११ ] ८।५।२८ = ( इन्द्रः ३२२३ ) ४।४६।४
( वामदेवो गौतमः । इन्द्रवायू )
[ ४११ ] ८।५।२८ ( ब्रह्मातिथिः काण्वः । अश्विनौ )
रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना ।
आ हि स्थाथो दिविस्पृशम् ।
( ४७६ ) ८।२२।५ ( सोभरिः काण्वः । अश्विनौ )
रथो...त्रिवन्धुरो हिरण्याभीशुरश्विना ।
...द्यावापृथिवी... ।
( इन्द्रः ३२२३ ) ४।४६।४ रथं हिरण्यवन्धुरम्...।
आ हि स्थाथो दिविस्पृशम् ।
[ ४१३ ] ८।५।३० ( ब्रह्मातिथिः काण्वः । अश्विनौ )
उपेमां सुष्टुतिं मम ।
( ४२६ ) ८।८।६ ( सध्वंसः काण्वः । अश्विनौ )
[ ४१८ ] ८।५।३५ हिरण्ययेन रथेन ।
१।३५।२ ( हिरण्यस्तूप आङ्गिरसः । सविता )
हिरण्ययेन...रथेना ।
[ ४२१ ] ८।८।१ आ नो विश्वाभिरूतिभिः ।
(इन्द्रः २१८९) ७।२४।४ (मैत्रावरुणिर्वसिष्ठः । इन्द्रः )
( ४३८ ) ८।८।१८ = ( ५७४ ) ८।८७।३
आ वां विश्वाभिरूतिभिः ।
[ ४२१ ] ८।८।१=(२८०) ५।७५।३ ( अवस्युरात्रेयः। अश्विनौ )
[ ४२१ ] ८।८।१ = ( ५१ ) १।९२।१८
( गौतमो राहूगणः । अश्विनौ )
[ ४२१ ] ८।८।१ = ( इन्द्रः ३०७० ) ६।६०।१५
( बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी )
[ ४२२ ] ८।८।२ ( सध्वंसः काण्वः अश्विनौ )
आ नूनं यातमश्विना ।
( ४५७ ) ८।९।१४ ( शशकर्णः काण्वः । अश्विनौ )
( ५७६ ) ८।८७।५ कृष्ण (आङ्गिरसो द्युम्नीको वा वासिष्ठः
प्रियमेध आङ्गिरसो वा । अश्विनौ )
[ ४२२ ] ८।८।२ = ( ४७ ) १।४७।९
[ ४२४ ] ८।८।४ = (४२८) ८।८।८
पुत्रः कण्वस्य वामिह ( ८ वाम्रुषिः ) ।
[ ४२५ ] ८।८।५ ( सध्वंसः काण्वः । अश्विनौ )
आ नो यातमुपश्रुति ।
( इन्द्रः ४३५) ८।३४।११ (नीपातिथिः काण्वः। इन्द्रः)
आ नो याह्युपश्रुति ।
[ „ ] ८।८।५ अश्विना सोमपीतये ।
( ५३५ ) ८।४२।६ नासत्या सोमपीतये ।
( इन्द्रः ३०९७-३०९९ ) ८।३८।७-९
( शावाश्व आत्रेयः । इन्द्राग्नी )
इन्द्राग्नी सोमपीतये ।
[ ४२६ ] ८।८।६ जुहूरेऽवसे नरा ।
१।४८।१४ ( प्रस्कण्वः काण्वः । उषाः )
जुहूरेऽवसे महि ।
[ ४२६ ] ८।८।६ = ( ५३०-५३२ ) ८।३५।२२-२४
आ यातमश्विना गतम् ।
[ ४२६ ] ८।८।६=(४१३) ८।५।३० उपेमां सुष्टुतिं मम ।
[ ४२७ ] ८।८।७ दिवश्चिद् रोचनादधि ।
१।४९।१ ( प्रस्कण्वः काण्वः । उषाः )
[ ४२७ ] ८।८।७ स्तोमेभिर्हवनश्रुता ।
( इन्द्रः ३०५५ ) ६।५९।१०
( बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी )
[ ४२८ ] ८।८।८=( ४३५ ) ८।८।१५=( ४३९ ) ८।८।१९
गीर्भिर्वत्सो अवीवृधत् ।
[ ४३० ] ८।८।१० = ( २६२ ) ५।७३।५
आ यद् वां योषणा ( ५ सूर्या ) रथमतिष्ठत् ।
[ ४३१ ] ८।८।११ = (४०) १।४७।२ रथेना यातमश्विना ।
[ ४३२ ] ८।८।१२ = ( ३८७ ) ८।५।४ पुरुमन्द्रा पुरूवसू ।
[ ४३२ ] ८।८।१२ = ( २५ ) १।४६।२ मनोतरा रयीणाम् ।
[ ४३३ ] ८।८।१३ = ७।९४।२ मा नो रीरधतं निदे ।
(इन्द्रः३०८१) ७।९४।३ ( मैत्रावरुणिर्वसिष्ठः । इन्द्राग्नी )
[ ४३४ ] ८।८।१४ = ( ४५ ) १।४७।७
( प्रस्कण्वः काण्वः । अश्विनौ )
[ ४३४ ] ८।८।१४ = ( ४० ) १।४७।२
[ ४३६ ] ८।८।१६ ( सध्वंसः काण्वः । अश्विनौ )
वसूयाद् दानुनस्पती ।
१।१३६।३ ( परुच्छेपो दैवोदासिः । मित्रावरुणौ )
आदित्या दानुनस्पती ।
२।४१।६ ( गृत्समदः शौनकः । मित्रावरुणौ )
आदित्या...... ।
[ ४३७ ] ८।८।१७ आ नो गन्तं रिशादसा ।
५।७१।१ ( बाहुवृक्त आत्रेयः । मित्रावरुणौ )
[ ४३८ ] ८।८।१८ = ( ५७३ ) ८।८७।३ =
( ४२१ ) ८।८।१ = ( इन्द्रः २१८९ ) ७।२४।४
वसिष्ठो मैत्रावरुणिः। इन्द्रः )
आ वां ( ८।८।१,७।२४।४ नो ) विश्वाभिरूतिभिः ।
[ ४३८ ] ८।८।१८ = ( ५७४ ) ८।८७।३ =
( अग्निः १०३ ) १।४५।४ ( प्रस्कण्वः काण्वः । अग्निः )
प्रियमेधा अहूषत ।

[४३८] ८।८।१८ राजन्तावध्वराणाम् ।
(अग्निः ८;१०३) १।१।८; १।४१।४ राजन्तमध्वराणाम् ।
(अग्निः ३८) १।२७।१ सम्राजन्तमध्वराणाम् ।
[४४४] ८।९।१ प्रास्मै यच्छतमवृकं पृथु च्छर्दिः ।
१।४८।१५ ( प्रस्कण्वः काण्वः । उषाः )
प्र नो यच्छतादवृकं पृथु च्छर्दिः ।
[४४६] ८।९।३=(४५२) ८।९।९ शशकर्णः काण्वः । अश्विनौ )
एवेत् काण्वस्य बोधतम् ।
(४६६) ८।१०।२ ( प्रगाथो घोरः काण्वः । अश्विनौ )
[४५६] ८।९।१३ हुवेथ वाजसातये ।
(इन्द्रः २७९) ८।६।३७; (इन्द्रः ४१८) ८।३४।४;
(इन्द्रः १७४१) ५।३५।६ हवन्ते वाजसातये ।
(इन्द्रः ३३३०) ६।५७।१ ( बार्हस्पत्यो भरद्वाजः । इन्द्रापूषणौ )
हुवेम वाजसातये ।
(५७७) ८।८७।६ विप्रासो वाजसातये ।
[४५७] ८।९।१४=(४२२) ८।८।२=(५७६) ८।८७।५
आ नूनं यातमश्विना ।
[४६१] ८।९।१८ ( शशकर्णः काण्वः । अश्विनौ )
सं सूर्येण रोचसे ।
(सोमः १६) ९।२।६ (मेधातिथिः काण्वः । पवमानः सोमः)
.........रोचते ।
[४६६] ८।१०।२ = (४४६) ८।९।३ = (४५२) ८।९।९
[४६७] ८।१०।३ देवेष्वध्याप्यम् ।
१।१०५।१३ (त्रित आप्त्यः कुत्स आङ्गिरसो वा । विश्वे देवाः)
देवेष्वस्त्याप्यम् ।
[४७२] ८।२२।१ ( सोभरिः काण्वः । अश्विनौ )
यमश्विना सुहवा रुद्रवर्तनी ।
(५९३) १०।३९।११ ( काक्षीवति घोषा । अश्विनौ )
[४७३] ८।२२।२ ( सोभरिः काण्वः । अश्विनौ )
भुज्युं वाजेषु पूर्व्यम् ।
(इन्द्रः १८३६) ८।४६।२० ( वशोऽश्व्यः । इन्द्रः )
[४७४] ८।२२।३ = (२५९) ५।७३।२ इह त्या पुरुभूतमा ।
[४७४] ८।२२।३ अर्वाचीना स्ववसे करामहे ।
(इन्द्रः २५४४) १०।३८।४ ( मुष्कवानिन्द्रः । इन्द्रः )
अर्वाञ्चमिन्द्रमवसे करामहे ।
[४७४] ८।२२।३=(३८८) ८।५।५=(इन्द्रः ३३०) ८।१३।१०
गन्तारा दाशुषो गृहम् ।
[४७६] ८।२२।५ = (४११) ८।५।२८
( सध्वंसः काण्वः । अश्विनौ )

[४७६] ८।२२।५ = (४७) १।४७।९ तेन नासत्या गतम् ।
[४७९] ८।२२।८ आ यातं सोमपीतये ।
(इन्द्रः ३२२८) ४।४७।३ ( वामदेवो गौतमः । इन्द्रवायू )
[४७९] ८।२२।८ पिबतं दाशुषो गृहे ।
(इन्द्रः ३२२५) ४।४६।६ ( वामदेवो गौतमः । इन्द्रवायू )
[४८०] ८।२२।९ रथे कोशे हिरण्यये......... ।
(मरुतः ८९) ८।२०।८ ( सोभरिः काण्वः । मरुतः )
[४८१] ८।२२।१० = (७१) १।११२।२०
( कुत्सः आङ्गिरसः । अश्विनौ )
[४८५] ८।२२।१४ ( सोभरिः काण्वः । अश्विनौ )
मा नो मर्ताय रिपवे वाजिनीवसू ।
(अग्निः १३९२) ८।६०।८ ( भर्गः प्रागाथः । अग्निः )
...रिपवे रक्षस्विने ।
[४८९] ८।२२।१८ विश्वा वामानि धीमहि ।
५।८२।६ ( श्यावाश्व आत्रेयः । सविता )
(अग्निः १२६१) ८।१०३।५ ( सोभरिः काण्वः । अग्निः )
[४९८] ८।२६।९ ( विश्वमना वैयश्वः व्यश्वो वाङ्गिरसः । अश्विनौ )
वयं हि वां हवामहे ।
(५७७) ८।८७।६ ( कृष्ण आङ्गिरसो द्युम्नीको वा वासिष्ठः, प्रियमेध आङ्गिरसो वा । अश्विनौ )
[५००] ८।२६।११ सजोषसा वरुणो मित्रो अर्यमा ।
१।४०।५ ( कण्वो घौरः । ब्रह्मणस्पतिः )
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा ।
७।६६।१२ ( वसिष्ठो मैत्रावरुणिः । आदित्यः )
यदोहते वरुणो मित्रो अर्यमा ।
(इन्द्रः ३१८१; ३१९१) ७।८२।१०; ८३।१०
( वसिष्ठो मैत्रावरुणिः । इन्द्रावरुणौ )
अस्मे इन्द्रो वरुणो मित्रो अर्यमा ।
(अग्निः १२३९) येन चष्टे वरुणो मित्रो अर्यमा ।
१०।३६।१ ( लुशो धानाकः । विश्वे देवाः )
द्यावाक्षामा वरुणो मित्रो अर्यमा ।
१०।६५।१,९ ( वसुकर्णो वासुक्रः । विश्वे देवाः )
अग्निरिन्द्रो ( ९ इन्द्रवायू ) वरुणो मित्रो अर्यमा ।
१०।९२।६ ( शार्यातो मानवः । विश्वे देवाः )
तेभिश्चष्टे वरुणो मित्रो अर्यमा ।
[५०५] ८।२६।१६ = (४०१) ८।५।१८
युवाभ्यां भूत्वश्विना ।
[५०९] ८।३५।१ आदित्यै रुद्रैर्वसुभिः सचाभुवा ।
२।३१।१ ( गृत्समदः शौनकः । विश्वे देवाः )
[५०९-१९] ८।३५।१-११ सजोषसा उषसा सूर्येण च ।

[ ५०९-११ ] ८।३५।१-३ सोमं पिबतमश्विना ।
[ ५११ ] ८।३५।३ = ( २२ ) १।३४।११
( हिरण्यस्तूप आङ्गिरसः । अश्विनौ )
[ ५१२-१४ ] ८।३५।४-६ विश्वेह देवौ सवनाव गच्छतम् ।
[ ५१२-१४ ] ८।३५।४-६ इषं नो वोळ्हमश्विना ।
[ ५१५-१७ ] ८।३५।७-९ सोमं सुतं महिषेवाव गच्छथः ।
[ ५१५-१७ ] ८।३५।७-९ त्रिर्वर्तिर्यातमश्विना ।
[ ५१८-२० ] ८।३५।१०-१२ प्रजां च धत्तं द्रविणं च धत्तम् ।
[ ५१८-२० ] ८।३५।१०-१२ ऊर्जं नो धत्तमश्विना ।
[ ५२१-२३ ] ८।३५।१३-१५ मरुत्वन्ता जरितुर्गच्छथो हवम् ।
[ ५२१-२३ ] ८।३५।१३-१५ आदित्यैर्यातमश्विना ।
[ ५२४-२६ ] ८।३५।१६-१८ हतं रक्षांसि सेधतममीवाः ।
[ ५२४-२६ ] ८।३५।१६-१८ सोमं सुन्वतो अश्विना ।
[ ५२७-२९ ] ८।३५।१९-२१ श्यावाश्वस्य सुन्वन्तो मदच्युता ।
[ ५२७-२९ ] ८।३५।१९-२१ अश्विना तिरोअह्न्यम् ।
[ ५३० ] ८।३५।२२=( ४९ ) १।९२।१६=( ३७९ ) ७।७४।२
अर्वाग् रथं ( १।९२।१६; ७।७४।२ समनसा ) नि यच्छतम् ।
[ ५३० ] ८।३५।२२ = ( ३७९ ) ७।७४।२ = ( ३९४ ) ८।५।११
= ( ४२१ ) ८।८।१ पिबतं सोम्यं मधु ।
( इन्द्रः ३०७० ) ६।६०।१५ ( बार्हस्पत्यो भरद्वाजः । इन्द्राग्नी )
( इन्द्रः १८०२ ) ८।२४।१३ ( विश्वमना वैयश्वः । इन्द्रः )
पिबाति सोम्यं मधु ।
[ ५३०-३२ ] ८।३५।२२-२४ = ( ४२६ ) ८।८।६
= ( ३९ ) १।४७।१ आ यातमश्विना
गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ।
[ ५३३ ] ८।३५।२३ विचक्षणस्य पीतये ।
( इन्द्रः ११ ) ८।१।२५ ( मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः )
[ ५३३-३५ ] ८।४२।४-६ = ( ४२५ ) ८।८।५
नासत्या ( ८।८।५ अश्विना ) सोमपीतये ।
( इन्द्रः ३०९७-९९ ) ८।३८।७-९ इन्द्राग्नी सोमपीतये ।
[ ५३५ ] ८।४२।६ ( नाभाकः काण्वः, अर्चनाना आत्रेयो वा ।
अश्विनौ )
एवा वामह्व ऊतये यथाहुवन्त मेधिराः ।
नासत्या सोमपीतये ॥
( इन्द्रः ३०९९ ) ( श्यावाश्व आत्रेयः । इन्द्राग्नी )
एवा वामह्व ऊतये यथाहुवन्त मेधिराः ।
इन्द्राग्नी सोमपीतये ॥
[ ५३७ ] ८।५७ ( वाल० ९ )। १ युवां देवास्त्रय एकादशासः ।
( सोमः ८१५ ) ९।९२।४ ( कश्यपो मारीचः । सोमः )
विश्वे देवास्त्रय एकादशासः ।

[ ५३९ ] ८।५७ ( वाल० ९ )।४ अयं वां भागो निहितो यज...
( २०५ ) १।१८३।४ अयं वां भागो निहित इयं गी...
[ ५४० ] ८।७३।१ = ( ३० ) १।४६।७ युञ्जाथामश्विना रथ...
[ ५४०-५७ ] ८।७३।१-१८ अन्ति षद्भूतु वाममवः ।
[ ५४४ ] ८।७३।५=( २७७ ) ५।७४।१० ( पौरः आत्रेयः । अश्वि...
[ ५४९ ] ८।७३।१० श्रुणुतं म इमं हवम् ।
२।४१।१३ ( गृत्समदः शौनकः । विश्वे देवाः
=६।५२।७ ( ऋजिश्वाः भारद्वाजः । विश्वे देव...
श्रुणुता म इमं हवम् ।
( ५५९ ) ८।८५।२ इमं मे शृणुतं हवम् ।
( इन्द्रः ३०७० ) ६।६०।१५ इन्द्राग्नी श्रुणुतं हवम् ।
[ ५५३ ] ८।७३।१४ = ( इन्द्रः ३०६९ ) ६।६०।१४
आ नो गव्येभिरश्व्यैः ।
[ ५५७ ] ८।७३।१८ पुरं न धृष्णवा रुज ।
( सोमः १०३१ ) ९।१०८।६ वर्मीव धृष्णवा रुज ।
[ ५५८ ] ८।८५।१ = ( २०६ ) १।१८३।५
आ मे हवं नासत्योप यातम् ।
[ ५५८ ] ८।८५।१ = ( २८० ) ५।७५।३ = ( ४२१ ) ८।८...
अश्विना गच्छतं युवम् ।
[ ५५८-६६ ] ८।८५।१-९ = ( ४७ ) १।४७।९
मध्वः सोमस्य पीतये ।
[ ५५९ ] ८।८५।२ = ( ५४९ ) ८।७३।१० =
( विश्वे देवाः ) २।४१।१३ = ( विश्वे देवाः ) ६।५२।७
[ ५६१ ] ८।८५।४ श्रुणुतं जरितुर्हवम् ।
( इन्द्रः ३२७ ) ८।१३।७ श्रुणुधी — ।
( इन्द्रः ३०८० ) ७।९४।२ ( वसिष्ठो मैत्रावरुणिः । इन्द्राग्नी )
[ ५६२ ] ८।८५।५ = ( ३९५ ) ८।५।१२ छर्दिर्यन्तमदाभ्यम्
[ ५६३ ] ८।८५।६ = ( ३८८ ) ८।५।५ = ( ४७४ ) ८।२२...
[ ५६७-६९ ] ८।८६।१-३ ता वां विश्वको हवते तनूकृथे
[ ५६७-७१ ] ८।८६।१-५ मा नो वि यौष्टं सख्या मुमोचतम्
[ ५७३ ] ८।८७।१ ( कृष्ण आङ्गिरसो द्युम्नीको वा वासिष्ठः प्रियमेधो
आङ्गिरसो वा । अश्विनौ
पिबतं घर्मं मधुमन्तमश्विना बर्हिः सीदतं नरा ।
ता मन्दसाना मनुषो दुरोण आ ।
( ५७५ ) ८।८७।४ पिबतं सोमं... सीदतं सुमत् ।
( ६०९ ) १०।४०।१३ ( काक्षीवती घोषा । अश्विनौ
ता मन्दसाना मनुषो दुरोण आ ।
[ ५७३ ] ८।८७।२ = ( ४६ ) १।४७।८ आ बर्हिः सीदतं नरा
[ ५७४ ] ८।८७।३ = ( इन्द्रः २१८९ ) ७।२४।४
= ( ४२१ ) ८।८।१ = ( ४३८ ) ८।८।१८

[५७४] ८।८७।३ = ( अग्निः १०३ ) १।४५।४ =
( ४३८ ) ८।८।१८ प्रियमेधा अहूषत ।

[५७५] ८।८७।४ = ( ४६ ) १।४७।८ = ( ५७३ ) ८।८७।२
= ( अग्निः १९२४ ) १।१४२।७

[५७६] ८।८७।५ = ( ४२२ ) ८।८।२ = ( ४५७ ) ८।९।१४
आ नूनं यातमश्विना ।

[५७६] ८।८७।५ = ( इन्द्रः ३३१ ) ८।१३।११
अश्वेभिः प्रुषितप्सुभिः ।

[५७६] ८।८७।५ = ( ५१ ) १।९१।१८ = ( २७९ ) ५।७५।२
= ( ३९४ ) ८।५।११ = ( ४२१ ) ८।८।१

[५७६] ८।८७।५ = ( ४१ ) १।४७।३ =
( मित्रावरुणौ ) ३।६२।१८ = ( मित्रावरुणौ ) ७।६।१६९

[५७७] ८।८७।६ = ( ५९८ ) ८।२६।९ वयं हि वां हवामहे ।

[५७८] ८।१०१।७ प्रति हव्यानि वीतये ।
८।१०१।१० ( जमदग्निर्भार्गवः । वायुः )

[५७९] ८।१०१।८ गृणाना जमदग्निना ।
३।६२।१८ ( विश्वामित्रो गाथिनः, जमदग्निर्वा । मित्रावरुणौ )
७।९६।३ ( वसिष्ठो मैत्रावरुणिः । सरस्वती )
गृणाना जमदग्निवत् ।
( सोमः ४४१ ) ९।६२।२४ ) गृणानो जमदग्निना ।
( सोमः ५३२ ) ९।६५।२५ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमानः सोमः )

## ऋग्वेदस्य दशमं मण्डलम् ।

[५८६] १०।३९।४ = ( इन्द्रः ७५७ ) १।५१।१३
= ( इन्द्रः ९९६ ) ८।१००।६
विश्वेत् ता वां ( ते ) सवनेषु प्रवाच्या ।

[५८९] १०।३९।७ = ( १११ ) १।११७।२०
न्यूहथुः पुरुमित्रस्य योषणाम् ( २० योषाम् ) ।

[५९२] १०।३९।१० = ( १३५ ) १।११८।९
( कक्षीवान् औशिजो दैर्घतमसः । अश्विनौ )

[५९३] १०।३९।११ = ( ४७२ ) ८।२२।१
यमश्विना सुहवा रुद्रवर्तनी ।

[५९५] १०।३९।१३ = ( ५९ ) १।११२।८
( कुत्स आङ्गिरसः । अश्विनौ )

[५९६] १०।३९।१४ अतक्षाम भृगवो न रथम् ।
( इन्द्रः १४८६ ) ४।१६।२० ( वामदेवो गौतमः । इन्द्रः )
ब्रह्मकर्मा भृगवो न रथम् ।

[६०९] १०।४०।१३ = ( ५७३ ) ८।८७।२
ता मन्दसाना मनुषो दुरोण आ ।

[६१२] १०।४१।२ विशो येन गच्छथो यज्वरीर्नरा ।
( ३४८ ) ७।६९।३ विशो येन गच्छतो देवयन्तीः ।

## " अश्विनौ–देवता–"

# मन्त्रान्तर्गतानां उपमानां सूची !

अंशा इव १०,१०६,९; ६२२ नः भजतं चित्रमप्नः ।
अक्षरा इव १,३४,४; १५ त्रिः पृक्षो अस्मे पिन्वतम् ।
अक्षी इव २,३९,५; २१९ चक्षुषा यातमर्वाक् ।
अग्निर्न चित इद्धः १,११२,१७; ६८ जठरस्य मज्मना पठर्वा ।
अग्निरिव देवयोः १०,१०६,३; ६१६ दीदिवांसा ।
अग्निम् उषाम् न १,१८१,९; १९३ जरते हविष्मान् ।
अजा इव २,३९,२; २१६ यमा परमा सचेथे ।
अत्कम् न ५,७४,५; २७२ वव्रिं प्र मुञ्चथः ।
( यथा ) अत्रिः ८,४२,५; ५३४ विप्रः अजोहवीत् ।
अत्रेः इव ८,३५,१९; ५२७ पूर्व्यस्तुतिं श्रृणुतम् ।
अध्वगौ इव ८,३५,८; ५१६ सुतं सोमं पतथः ।
अपः न १,१८०,४; १७८ क्षोदोऽवृणीतमेषे ।
अपः न स्तर्यम् ७,६८,८; ३४५ अघ्न्याम् अपिन्वतम् ।
अपसा इव वस्त्रा १०,१०६,१; ६१४ धियः वि तन्वाथे ।
अभ्रिया इव वातः १,११६,१; ७७ सोमान् इयर्मि ।
अवनिः न १,१८१,३; १८७ प्रवत्वान् सुविताय गम्याः ।
अश्वम् न १,११७,४; १०५ गूळ्हम् रेभं सं रिणीथः ।
अश्वम् न १०,१४३,१; ६२७ अत्रिं अर्थं यातवे कृणुथः ।
अश्वम् न वाजिनम् १०,१४३,२; ६२८ अरेणवो यमस्नत ।
अस्तम् इव १,११६,२५; १०१ जरिमाणं जगम्याम् ।
आत्मा इव वातः १,३४,७; १८ तिस्रः [ वेदीः ] गच्छतम् ।
आरङ्गरा इव १०,१०६,१०; ६२३ मधु एरयेथे ।
इर्या इव १०,१०६,४; ६१७ पुष्ट्यै ।
इन्द्रो न शक्तिम् ४,४३,३; २४६ ईवतो द्यून् ।
इन्द्रमिव चर्षणीसहम् १,११९,१०; १४७ शर्यैरभिद्युं चर्कृत्यम् ।
उग्रा इव रुचा १०,१०६,४; ६१७ हवम् आ गमिष्टम् ।
उत्सं न १०,१४३,६; ६३२ समसे भूषतम् ।
उदन्यजा इव १०,१०६,६; ६१९ जेमना मदेरू ।
उपधी इव २,३९,४ २१८ नः पारयतम् ।
उष्टारा इव १०,१०६,२; ६१५ फर्वरेषु श्रयेथे ।
ऋभू न १०,१०६,७; ६२० खरमज्रा ।

एतग्वा चित् न ७,७०,२; ३५६ समुद्रान् सरितः पिप
ओष्ठौ इव २,३९,६; २२० आस्ने मधु वदन्ता ।
कनीन इव जारः १,११७,१८; ११९ चक्षदानः शतमेकं
कर्णा इव १०,१०६,९; ६२२ शासुः अनु हि स्मराथः ।
कर्णौ इव २,३९,६; २२० सुश्रुता भूतमस्मे ।
काराधुनी इव १,१८०,८; १८२ प्रशस्तः चितयत्सहस्रै
कार्ष्मं इव १,११६,१७; ९३ अतिष्ठद्र्वता जयन्ती ।
किरणा इव १०,१०६,४; ६१७ भुज्यै ( भवथः । )
कीनारा इव १०,१०६,१०; ६२३ स्वेदं आसिष्विदाना
कुत्सः न १०,४०,६; ६०२ जरितुर्नशायथः ।
क्रिविः न सेके ८,८७,१; ५७२ स्तोमः आ गतम् ।
क्षत्र इव १०,१०६,७; ६२० मरायु अर्थेषु तर्तरीथः ।
क्षामा इव २,३९,७; २२१ नः रजांसि समजतम् ।
क्षामा इव सूयवसात् १०,१०६,१०; ६२३ ऊर्जां सचेथे
क्ष्णोत्रेण इव २,३९,७; २२१ गिरः स्वधितिं सं शिशीत
खृगला इव २,३९,४; २१८ विस्रसः अस्मान् पातम् ।
गावः न ऊधभिः ८,९,१९; ४६२ अंशवः ( ऊधभिः ) दुह्रे
गृध्रा इव वृक्षम् २,३९,१; २१५ निधिमन्तम् अच्छ ।
गोः न सेके १,१८१,८; १९२ पीपाय मनुषो दशस्यन् ।
गौरा इव विद्युतम् ७,६९,६; ३५२ तृषाणा सवनोप यात
( यवसम् अनु ) गौरौ इव ५,७८,२; २९८ आगच्छतम्
गौरौ इव ईरिणे ८,८७,१; ५७१ मध्वः सुतस्य पातम् ।
गौरौ इव ईरिणम् ८,८७;४; ५७५ सुष्टुतिम् उप गन्तम्
( इळह ) ग्रन्थिम् न १०,१४३,२; ६२८ अत्रिम् वि ष्यतम्
ग्रावाणा इव २,३९,१; २१५ तत् अर्थं जरेथे ।
घर्मा इव १०,१०६,८; ६२१ जठरे मधु सनेरू ।
चक्रवाका इव २,३९,३; २१७ वस्तोः प्रति अर्वाञ्चा यातम्
( कापया ) जरणा इव १०,४०,३; ५९९ वस्तोः वस्तोः प्रात
जरतोः इव पुराणवत् ८,७३,११; ५५० अन्ति षद्भूतु ।
( युगा ) जूर्णा इव १,१८४,३; २१० वच्यन्ते वां ककुहा ।
तन्यतुः न वृष्टिम् १,११६,१२; ८८ सनये दंस उग्रम् ।

(रेभमच्छिन्नं यथा) तृणम् अथ० ६,१०२,२; ६४८ मनः मयि ।
दम्पती इव २,३९,२; २१६ क्रतुविदा जनेषु ।
दिव्यासः न गृध्राः १,११८,४; १३० अप्तुरः अभि प्रयः ।
दिशं न दिष्टाम् ऋजूयेव १,१८३,५; २०६ मे हवं उपयातम् ।
दूतः न ६,६३,१; ३१७ स्तोमोऽविदन्नमस्वान् ।
दूतः न ७,६७,१; ३२८ रथः अजीगः ।
(यथा) दूतः ८,५,३; ३८६ तथा वाचम् ऊहिषे ।
दूता इव २,३९,१; २१५ हव्या जन्या पुरुत्रा ।
दूता इव १०,१०६,२; ६१५ जनेषु यशसा स्थः ।
(यथा चक्रुः) देवासुराः अथ० ६,१४१,३; ६५२ सहस्रपोषाय ।
(दिवि) द्याम् इव अथ० ६,६९,३; ६७६ तत् (वर्चः) मयि ।
द्रापिम् इव १,११६,१०; ८६ वव्रिं प्रामुञ्चतं च्यवानात् ।
द्वारा इव ८,५,२१; ४०४ अप वर्षथः ।
धेनुः इव ८,२२,४; ४७५ सुमतिः अस्मान् अच्छ ।
ध्रुवसे न योनिम् ७,७०,१; ३५१ यत् (अश्वं) आ सेदथुः ।
नद्या इव २,३९,५; २१९ युवां रीतिः ।
नभः न ८,९,८; ४५१ स्तोमाः वां आ चुच्यवीरत ।
नभ्या इव २,३९,४; २१८ नः पारयतम् ।
नावा इव २,३९,४, २१८ नः पारयतम् ।
नासा इव २,३९,६, २२० नः तन्वो रक्षितारा भूतम् ।
नित्यं न सूनुम् १०,३९,१४; ५९६ वां स्तोमं न्यमृक्षाम ।
निधिम् इव अपगूळ्हम् १,११६,११; ८७ उद् दर्शतः दूपथुः
निवना इव सिन्धवः १०,४०,९; ६०५ आस्मै रीयन्ते ।
निष्कृतम् न योषणा १०,४०,६; ६०२ मधु आला भरत ।
नृपती इव १०,१०६,४; ६१७ तुर्यै ।
नैतोशा इव १०,१०६,६; ६१९ तुर्फरी पर्फरीका ।
पत्रा इव १०,१०६,७; ६२० चर्चरम् ।
पतरा इव १०,१०६,८; ६२१ चचरा ।
(वृक्षे) परशुमान् इव ८,७३,१७; ५५६ अश्विना— ।
परिज्माना इव १०,१०६,३; ६१६ पुरुत्रा यजथः ।
पर्णा मृगस्य पतरोः इव १,१८२,७; २०० ओमताय कम् ।
पशुं न नष्टमिव १,११६,२३; ९९ दर्शनाय विष्णाप्वं ददथुः ।
पस्त्या इव १०,१०६,३; ६१६ चित्रा यजुः आ गमिष्टम् ।
पादा इव २,३९,५; २१९ तन्वे शम्भविष्ठा ।
पादा इव १०,१०६,९; ६२२ गाधं तरते ।
पिता इव ८,२२,१५; ४८६ हुवे ।
पितरा इव ३,५८,२; २२७ मेधाः ऊर्ध्वा भवन्ति ।
पितरा इव पुत्रा १०,१०६,४; ६१७ आपी वो अस्मे ।
(यथा) पितुः ८,८६,४; ५७० सुमतिः स्वादिष्ठा ।
पितुः न नाम १०,३९,१; ५८३ सुहवं हवामहे ।

१ [ दै. अश्विनौ ]

पुत्रम् इव पितरौ १०,१३१,५; ६२६ अवथुः काव्यैः ।
पुत्राय पितरा इव १०,३९,६; ५८८ मह्यं शिक्षतम् ।
पुरम् न ८,७३,१८; ५५७ आ रुज ।
पूर्वगत्वा इव सख्ये ७,६७,७; ३३४ निधिर्हितः माध्वी ।
पूषा इव १,१८१,९; १९३ पुरन्धिः हविष्मान् जरते ।
प्रधी इव २,३९,४; २१८ नः पारयतम् ।
प्रवृक्तम् १,११६ २४; १०० विप्रुतं रेभं उद्नि उन्निन्यथुः ।
प्रायोगा इव १०,१०६,२; ६१५ श्वात्र्या शासुः आ इथः ।
बर्हिः इव १,११६,१; ७७ प्र वृञ्जे स्तोमान् ।
बृहन्ता इव १०,१०६,९; ६२२ गम्भरेषु प्रतिष्ठाम् ।
ब्रह्मा इव अथ० ६,५०,२; ६४४ स्थितं हविः ।
ब्रह्माणा इव २,३९,१; २१५ (युवां) विदथे उक्थशासा ।
भृगवः न १०,३९,१४; ५९६ रथम् अतक्षाम ।
मक्षः मध्वः न ४,४५,४; २४० सवनानि गच्छथः ।
(यथा) मक्षा इदं अथ० ९,१,१७; ६८७ वर्चः तेजः ।
(यथा) मधु मधुकृतः अथ० ९,१,१६; ६८६ वर्चः ।
मनन्या न १०,१०६,८; ६२१ मनऋङ्गा जग्मी ।
मनुषः न होता १,१८०,९; १८३ प्र स्पन्द्रा याथः ।
मनुष्वत् १,४६,१३; ३६ शम्भू आ गतम् ।
(यथा चक्रुः) मनुष्याः अथ० ६,१४१,३, ६५२ सहस्रपोषाय ।
मर्यं न योषा १०,४०,२; ५९८ कृणुते सधस्थ आ ।
महिषा इव ८,३५,७-९; ५१५-५१७ सुतं सोमं अव गच्छथः ।
महिषा इव अवपानात् १०,१०६,२; ६१५ पानात् मा ।
मित्रा इव ऋता १०,१०६,५; ६१८ शतरा शातपन्वा ।
मित्रासः न ३,५८,४; २२९ प्र ददुः उस्रो अग्रे ।
मृगा इव वारणा १०,४०,४; ६०० दोषा वस्तोर्हविषा ।
(यथा) मेधिराः आहुवन्त ८,४२,६; ५३५ एवा वामह्वे ।
मेने इव २,३९,२; २१६ तन्वा शुम्भमाने ।
मेषा इव १०,१०६,५; ६१८ इषा सपर्या पुरीषा ।
युगा इव २,३९,४; २१८ नः पारयतम् ।
युवशा इव कन्यनाम् ८,३५,५; ५१३ इह स्तोमं जुषेथाम् ।
योनिः सूष्यन्त्याः इव ५,७८,५; ३०१ वि जिहीष्व वनस्पते ।
(नाधमाना इव) योषा ५,७८,४; ३०० अत्रिर्यद् वाम० ।
योषणां न मर्ये १०,३९,१४; ५९६ न्यमृक्षाम स्तोमं वाम् ।
रथाः इव ७,७४,६; ३८३ प्र ये ययुः अवृकासः ।
रथम् न १,११९,७; १४४ वन्दनं निर्ऋतं जरण्यया ।
रथम् न १०,१४३,१; ६२७ अत्रिं नवं कृणुथः ।
रथान् इव ५,७३,१०; २६७ ब्रह्माणि तक्षाम ।
रथ्या इव २,३९,२; २१६ वीरा वरं आ सचेथे ।
रथ्या इव २,३९,३; २१७ शक्रा अर्वाञ्चा यातम् ।

रथ्या इव चक्रा १,१८०,४; १७८ प्रति यन्ति मध्वः ।
रथिं न कश्चित् १,११६,३;७९ तुग्रो भुज्युं ममृवान् ।
रश्मीन् इव ८,३५,२१; ५२९ अध्वरान् उप सृजतम् ।
राजपुत्राः इव १०,४०,३; ५९९ सवना अव गच्छथः ।
राजाश्वः पृष्ट्यामिव अथ० ६,१०२,१; ६४८ खिदामि ते।
(शुभे) रुक्मं न १,११७,५; १०६ दर्शतं निखातम् उदूपथुः।
वंसगा इव पूषर्या १०,१०६,५; ६१८ पूषर्या शिम्बाता ।
वचसं न मन्तवे १,११२,२; ५३ सुभरा रथमा तस्थुः ।
(अधिवस्त्रा) वधूः इव ८,२६,१३; ५०२ यः यज्ञेभिः आवृतः।
(यथा वर्चस्वतीं) वाचं अथ० ९,१,१९; ६८८ सारघेण मा।
(यथा भर्गस्वतीं) वाचं अथ० ६,६९,२; ६७५ साघरेण मा ।
वाजा इव १०,१०६,५; ६१८ उच्चा वयसा घर्म्येष्ठा।
वातः न १,१८०,६; १८० सूरिः प्रेषत् वेषत् ।
(यथा) वातः पुष्करिणीं ५,७८,७; ३०३ एवा ते दशमास्यः।
(यथा) वातः वनम् ५,७८,८; ३०४ एवा त्वं दशमास्य ।
वाता इव २,३९,५; २१९ युवम् अजुर्या ।
वायुः न १०,१०६,७; ६२० पर्फरत् ।
(यथायं) वाहः समैति अथ०६,१०२,१; ६४७ एवा मामभि।
विः न पर्णैः १,१८३,१; २०१ सुकृतः त्रिधातुना उपयाथः।
विधवा इव देवरम् १०,४०,२; ५९८ को वां शयुत्रा ।
विप्रुद्रुहा इव ८,२६,१५; ५०४ गिरा यज्ञम् उहथुः ।
वृषभः न १,१८१,६; १९० निष्षाट् पूर्वीः इषः प्र चरति ।
वेः इव अच्छेदि पर्णम् १,११६,१५; ९१ आजा खेलस्य ।
शांयू इव १०,१४३,६; ६३२ मंहिष्ठा ।
शकुनस्य इव पक्षा १०,१०६,३; ६१६ साकंयुजा ।
शफौ इव २,३९,३; २१७ जर्भुराणा तरोभिः ।
शासुः इव १,११६,१३; ८९ वध्रिमत्याः तत् श्रुतम् ।
शूरो न अज्म पतयद्भिः १,१५८,३;१७१उप वाम्...गमेयम्।
शृङ्गा इव २,३९,३; २१७ नः प्रथमा गन्तमर्वाक् ।
श्येना इव ८,७३,४; ५४३ कुह पेतथुः ।
श्येना इव ५,७४,९; २७६ विचेतसा विभिः दीयतम् ।

श्येनौ इव ८,३५,९; ५१७ सुतं सोमं पतथः ।
श्रुष्टीवा इव प्रेषितः ७,७३,३; ३७५ प्रेषितः वां अबोधि
श्रुष्टीवाना इव १०,१०६,४; ६१७ हवम् आ गमिष्टम् ।
श्वाना इव २,३९,४; २१८ नः अरिषण्या तनूनाम् ।
(यथा) समुद्रः एजति ५,७८,८; ३०४ एवा त्वं...अवेहि
सर्गान् इव ८,३५,२०; ५२८ सुष्टुतीः उप सृजतम् ।
सारघा इव १०,१०६,१०; ६२३ नीचीनबारे गवि मधु
सिंहम् इव द्रुहस्पदे ५,७४,४; २७१ यद्दीं ...जिन्वथः ।
सुदिना इव पृक्षः १०,१०६,१; ६१४ पृक्ष आ तंसयेथे ।
सुव्रतः न १,१८०,६; १८० सूरिः वाजं महे आ ददे ।
सुषुप्वांसं न निऋतेरुपस्थे१,११७,५;१०६तमसि क्षियन्तम्
सूनुः न पितरा ७,६७,१; ३२८ वां अच्छा विवक्मि ।
(पिता) सूनवे इव । वा०य० १४,३; ६३६ त्वं सुशेवा एधि
सूर्यम् न १,११७,५; १०६ तमसि क्षियन्तं वन्दनाय ।
सृण्या इव जर्भरी १०,१०६,६; ६१९ जर्भरी तुर्फरीतू ।
सोमं इव स्रुवेण १,११६ २४; १०१ उदनि... उन्निन्यथुः
सोमम् न १०,३९,२; ५८४ मघवत्सु---कृतम् ।
(यथा)सोमः प्रातःसवने अथ०९,१,११; ६८५ एवा मे वर्चः
स्तनौ इव २,३९,६; २२० नः जीवसे पिप्यतम् ।
स्वर् न ४,४५,२; २३८ शुक्र तन्वन्त आ रजः ।
स्वर् न ४,४५,६; २४२ शुक्र तन्वन्त आ रजः
हंसौ इव ५,७८,१-३; २९७-२९९ सुतान्...आ पततम्
हंसौ इव ८,३५,८; ५१६ सोमम् पतथः ।
हरिणौ इव अनु यवसम्५,७८,२;२९८ सुतान्...आ पततम्
हस्ता इव २,३९,७; २२१ शक्तिं अभि संददी नः ।
हस्तौ इव २,३९,५, २१९ तन्वे शम्भविष्ठा ।
हारिद्रवा इव वना इत् ८,३५,७;५१५सुतं सोमं उप पतथः
हिम्या इव वाससः १,३४,१; १२ युवोः हि यन्त्रम् ।
हिरण्यं प्रति १,४६,१०; ३३ सूर्यः व्यख्यत् ।
हिरण्यस्य इव कलशम्१,११७,१२; ११३ कूपे...उदूपथुः
ह्वारः न १,१८०,३; १७७ शुचिर्यजते हविष्मान् ।

# अश्विनौ—देवताया गुणबोधक-पदसूची।

[ 'अश्विना-नौ' इति द्विवचनान्तं पदम्, अतस्तद्बोधकपदान्यपि द्विवचनान्तानि वर्तन्ते। ]

## ( १ ) सुरथा अश्विनौ । [ अश्विनोः रथः । ]

# ( २ ) स्वश्वौ अश्विनौ । [ अश्विनोः अश्वाः । ]

अज्राः ६,६२,२; ३०७
अत्याः १,१८१,२; १८६
अध्वरश्रियः १,४७,८; ४६
अप्तुरः १,११८,४; १३०
अरुषाः-षासः १,११८,५; १३१ । ४,४३,६; २४९
अवमाभिः ( तृतीया ) ६,६२,११; ३१६
अश्वाः-श्वासः १,११८,५; १३१ । ६,६३,७; ३१३ । ८,५,७
३९०
असिधः ४,४५,४; २४०
अहभिः दाविध्वतः ४,४५,६; २४२
आकेनिपासः ४,४५,६; २४२
आशवः १,११८,४; १३० । ८,५,७; ३९०
आशुहेमानः १,११६,२; ७८
इषिराः ६,६२,३; ३०८
उदप्रुतः ४,४५,४; २४०
उषर्बुधः १,९२,१८; ५१ । ४,४५,४; २४०
उहुवः ४,४५,४; २४०
ऋतयुजः ७,७१,३; ३६४
एवाः १,१८१,६; १९०
ककुहासः ४,४४,२; २५२
तरणयः ७,६७,८; ३३५
दिव्यासः १,१८१,२; १८६
दिव्यासो न गृध्राः १,११८,४; १३०
देवयुक्ताः ७,६७,८; ३३५
द्रवत्पाणयः ८,५,३५; ४१८
नियुतः ६,६२,११; ३१६
पतङ्गाः १,११८,४-५; १३०-१३१
पयस्पाः १,१८१,२; १८६
परमाभिः ( तृतीया ) ६,६२,११; ३१६
पर्णिनः ८,५,३३; ४१६
प्रुषितप्सवः ८,५,३३, ४१६ । ८७,५; ५७६
मक्षूयवः ७,७४,४; ३८१
मधुमनाः ४,४५,४; २४०
मध्यमाभिः ( तृतीया ) ६,६२,११; ३१६
मनोजवसः ६,६२,३; ३०८
मनोजुवः १,१८१,२; १८६
मन्दिनः ४,४५,४; २४०
मन्दिनिस्पृशः ४,४५,४; २४०
युक्ता वृषभश्च शिशुमारश्च १,११६,१८; ९४
युक्तासः रथे १,११८,४; १३०
रजः शुक्रं आतन्वन्तः ४,४५,६; २४२
रजांसि सुयमासः १,१८०,१; १७५
रासभः १,११६,२; ७८ । ८,८५,७; ५६३
वपुषः १,११८,५; १३१
वयः १,११८,५; १३१ । ४,४३,६; २४९ । ६,६३,६-७
३१२-३१३ । ८,५,३३; ४१६
वहिष्ठाः ६,६३,७; ३२३
वाजाः १,१८१,६; १९०
वातरंहसः १,१८१,२; १८६
वीतपृष्ठाः १,१८१,२; १८६
वीलुपत्मानः १,११६,२; ७८
वृषणः १,१८१,२; १८६ । ७,६९,१; ३४७ । ७१,३; ३६४
शुचयः १,१८१,२; १८६
श्येनासः १,११८,४; १३० । ८,५,७; ३९०
सप्तयः १,४७,८; ४६
सुभ्वः ७,६७,८; ३३५
सुम्नायवः ७,७१,३; ३६४
सुयमासः रजांसि १,१८०,१; १७५
सुयुजः ३,५८,२-३; २२७-२२८
स्थविरासः ७,६७,४; ३३१
स्वराजः १,१८१,२; १८६
हंसासः ४,४५,४; २४०
हयाः ७,७४,४; ३८१
हरी १,१८१,५; १८९
हिरण्यपर्णाः ४,४५,४; २४०

# (३) अश्विनोः सञ्चारः ।

## (१) पृथिव्याम् ।

४,४५,७; १४३ येन ( रथेन ) सद्यः परि रजांसि याथः ।

५,७३,३; १६० ईर्मान्यद् वपुषे वपुः चक्रं रथस्य येमथुः। पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः॥

७,६९,१; ३४८ स [ रथः ] पप्रथानः अधि पञ्च भूमा ।

## (२) दिवि ।

१,११९,३; १४० युवोरह प्रवणे चेकिते रथः ।

१,१३९,४; १६१ अचेति दस्रा व्युनाकमृण्वथः युञ्जते वां रथयुजो दिविष्टिषु पथेव यन्ता···रजः ।

१,१८०,१०; १८४ तं वा रथं वयमद्या हुवेम···यामियानम् ।

८,९,११; ४६४ यन्नूनं धीभिरश्विना पितुर्योना निषीदथः॥

८,२२,४; ४७५ युवो रथस्य परि चक्रमीयते ईर्मान्यद्वां इषण्यति ।

८,८३,७; ४२७ दिवश्चिद्रोचनादधि आ नो गन्तं स्वर्विदा ।

१,१८३,६; २०७
१,१८४,६; २१३
३,५८,५; २३० } एह यातं पथिभिर्देवयानैः ।

७,७०,३; ३५७ यानि स्थानानि अश्विना दधाते दिवो यह्वीष्वोषधीषु विक्षु । नि पर्वतस्य मूर्धनि सदन्त ॥

## (३) द्यावापृथिव्योः ।

१,३४,८; १९ तिस्रः पृथिवीरुपरि प्र वा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ।

३,५८,८; २३३ रथो ह वां ऋतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ।

४,४५,५; २५५ आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।

८,१०,६; ६७० यदन्तरिक्षे पतथः पुरुभुजो यद्वेमे रोदसी अनु । यद्वा स्वधाभिरधितिष्ठथो रथे ··· अत आयातमश्विना ॥

८,२२,५; ४७६ [ वां रथः ] परि द्यावापृथिवी भूषति श्रुतः ।

८,७३,१३; ५५२ यो वां रजांस्यश्विना रथो वि याति रोदसी ।

८,८३,३; ४२३ आ यातं नहुषस्परि आन्तरिक्षात् सुवृक्तिभिः।

८,८३,४; ४२४ आ नो यातं दिवस्परि अन्तरिक्षादध प्रिया ।

## (४) परावति ।

१,३४,७; १८ परि त्रिधातु पृथिवीमशायतम् । तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥

१,४७,७; ४५ यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे । अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥

५,७३,१; १५८ यदद्य स्थः परावति यदर्वावति अश्विना । यद्वा पुरू पुरुभुजा यदन्तरिक्ष आ गतम् ॥

८,५,८; ३९१ येभिस्तिस्रः परावतो दिवो विश्वानि रोचना । त्रीँरक्तून् परि दीयथः ॥

८,८,१४; ४३४ यन्नासत्या परावति यद्वा स्थो अध्यम्बरे ।

## (५) जले ।

१,३०,१८; १० समानयोजनो हि वां रथः···समुद्रे अश्विने यते ।

५,७३,८; १६५ यत् समुद्राति पर्षथः ।

६,६२,२; ३०७ पुरू वरांसि अमिता मिमाना अपो धन्वान्यति याथो अज्रान् ।

७,६७,८; ३३५ परि वां सप्त स्रवतो रथो गात् ।

४,४३,६; २३९ सिन्धुर्ह वां रसया सिञ्चदश्वान् घृणा वयोऽरुषासः परि ग्मन् ।

## (६) दिवि जले च ।

१,४६,८; ३१ अरित्रं वा दिवस्पृथु तीर्थे सिन्धूनां रथः ।

१,१८०,१; १७५ युवो रजांसि सुयमासो अश्वा रथो यद्वां परि अर्णांसि दीयत् ।

४,४३,५; २४८ उरु वां रथः परि नक्षति द्यामा यत् समुद्रादभि वर्तते वाम् ।

५,७६,४; १९० आ नो दिवो बृहतः पर्वतात् आ अद्भ्यः यातम् ।

८,२६,१७; ५०६ यदद्दो दिवो अर्णव इषो वा मदथो गृहे ।

८,१०,१; ४६५ यत स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः। यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥

## (७) सर्वदिक्षु ।

७,७२,५; ३७२
७,७३,५; ३७७ } आ पश्चातान्नासत्या पुरस्तात् अश्विना यातमधरादुदक्तात् ।

८,१०,५; ४६९ यदद्याश्विनावपाग् यत् प्राक् स्थो वाजिनीवसू । यद् द्रुह्यवि अनवि तुर्वशे यदौ हुवे नामथ आ गतम् ॥

( ८ ) अन्यदेवैः सह ।

८,९,१२; ४५५ यदिन्द्रेण सरथं याथो अश्विना
यद्वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा
यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥

( ९ ) आशातः ।

१,२२,४; २८ न हि वामस्ति दूरके यत्रा रथेन गच्छथः ।

५,७५,७; २८४ तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या ।

५,७४,१; २६८ कूष्ठो देवावश्विनाऽद्या दिवो मनावसू ?

५,७४,२; २६९ कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।

८,७३,४; ५४३ कुह स्थः ? कुह जग्मथुः ? कुह श्येनेव पेतथुः ।

८,७३,५; ५४४ यदद्य कर्हि कर्हिचित् शुश्रूयातमिमं हवम् ।

१०,४०,२; ५९८ कुह स्विद् दोषा ? कुह वस्तोरश्विना ? कुहाभिपित्वं करतः ? कुहोषतुः ? ।

## ( ४ ) अश्विनोः आवाहनकालः ।

१,११८,११; १३७ हुवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ।

७,६८,९; ३४६ अग्ने बुधानः उषसां सुमन्मा ।

७,६९,५; ३५१ तेन नः शंयोरुषसो व्युष्टौ न्यश्विना वहतं यज्ञेऽस्मिन् ।

७,७१,३; ३६४ आ वां रथमवमस्यां व्युष्टौ ··वर्तयन्तु ।

७,७१,४; ३६५ यो वां रथः··· उस्रयामा ।

७,७२,४; ३७१ विचेदुच्छन्ति उषासः प्र वां ब्रह्माणि कारवो भरन्ते ।

१०,४१,१; ६११ वयं व्युष्टौ उषसो हवामहे ।

५,७६,१; २८७ आ भात्यग्निरुषसामनीकं अर्वाञ्चा ··· नूनं रथेह यातम् ।

५,७६,२; २८८ दिवाभिपित्वेऽवसागमिष्ठा ।

१,११२,२४; ७९ अप्नूस्वेऽवसे नि ह्वये वाम् ।

१,३९,२; २१६ प्रातर्यावाणा ।

५,७७,१; २९२ प्रातर्यावाणा ।

५,७७,१; २९१ प्रातर्हि यज्ञमश्विना दधाते ।

५,७७,२; २९३ प्रातर्यजध्वमश्विना ।

८,२२,१५; ४८६ आ सुग्म्याय···प्राता रथेनाश्विना हुवे ।

१०,४०,१; ५९७ प्रातर्यावाणं रथम् ।

१०,४०,३; ५९९ प्रातर्जरेथे जरणेव कापया ।

१०,४१,२; ६१२ प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं··· रथम् ।

८,२२,११; ४८२ इदा चिदह्नो हवामहे ।

८,२२,१३; ४८४ ताविदा चिदहानाम्···वन्दमान उप ब्रुवे ।

८,२२,१४; ४८५ तावित् दोषा ता उषसि शुभस्पती ता यामन् [ हवामहे ] ।

१०,३९,१; ५८२ यो वां रथो दोषामुषासो हव्यः ··तमु वामिदं वयं सुहवं हवामहे ।

१०,४०,४; ६०० दोषा वस्तोर्हविषा नि ह्वयामहे ।

७,७१,२; ३६३ उपायातं दाशुषे ·· ।
दिवा नक्तं माध्वी त्रासीथां नः ॥

१,११२,२५; ७६ द्युभिः अक्तुभिः परि पातमस्मान् ।

१,३४,१; १२ त्रिश्चिन्नो अद्या अवतम् ।

१,३४,३; १४ समाने अहन् त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।

१,३४,४; १५ त्रिर्वर्तिर्यातम् ।

८,३५,७-९; ५१५-५१७ विवर्तिर्यातम् ।

८,२६,३; ४९२ ता वामद्य हवामहे ··· अति क्षपः ।

८,७३,६; ५४५ अश्विना यामहूतमा नेदिष्ठं याम्याप्यम् ।

१,४६,१४; ३७ ऋता वनथो अक्तुभिः ।

५,७६,३; २८९ उता यातं संगवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य । दिवा नक्तमवसा शंतमेन ॥

## ( ५ ) अश्विनोः भिषक्कर्म ।

( १ ) भिषजा ।

भिषजा १,११६,१६; ९२ । १५७,६; १६८ । ८,८६,१; ५६७ । १०,३९,५; ५८७ । वा० य० २०,५९, ६६३

भिषजा रुतस्य चित् ११,३९,३; ५८५ अन्धस्य चित... कृशस्य चित् ··· ।

भिषजा देवानाम् वा० य० २१,५३; ६६४

भिषजा दैव्या ८,१८,८; ४७१

( २ ) भिषक्कर्म ।

१,३४,६; १७ त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।

१,१५७,६; १६८ युवं ह स्थः भिषजा भेषजेभिः ।
८,९,६; ४४९ यन्नासत्या भुरण्यथः यद् वा देव भिषज्यथः।
८,९,१५; ४५८ यन्नासत्या पराके अर्वाकि अस्ति भेषजम् । तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ।
८,२२,१०; ४८१ ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरम् ॥
८,३५,१६-१८; ५२४-५२६ सेधतममीवाः ।
७,७०,३; ३५७ यानि स्थानानि अश्विना दधाथे दिवो यह्वीषु ओषधीषु विक्षु ।
७,७०,४; ३५८ चनिष्टं देवा ओषधीष्वप्सु
१,१५७,५; १६७ युवं हि गर्भं जगतीषु धत्थः युवं विश्वेषु भुवनेषु अन्तः । युवमग्निं च वृषणावपश्च वनस्पतीरश्विना वैरयेथाम् ॥
७,७१,२; ३६२ युयुतमस्मदनिराममीवान् ।

## ( ६ ) अश्विनोः सूर्याग्न्युषसां च सम्बन्धः ।

१,४६,१; २४ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥
१,४६,१०; ३३ अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः । व्यख्यज्जिह्वयासित ॥ ( तत्तदिदश्विनोरवः )
१,४६,१४; ३७ युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् ।
१,१५७,१; १६३ अबोध्यग्निर्ज्म उदेति सूर्यः व्युषाश्चन्द्रा मह्यावो अर्चिषा । आयुक्षातामश्विना यातवे रथं प्रासावीद् देवः सविता जगत् पृथक् ॥
१,१८०,१; १७१ मध्वः पिबन्ता उषसः सचेथे ।
१,१८३,२; २०३ दिवो दुहित्रा उषसा सचेथे ॥
३,५८,१; २२६ धेनु प्रत्नस्य काम्यं दुहानाऽन्तः पुत्रश्चरति दक्षिणायाः । आ द्योतनिं वहति शुभ्रयामा उषसः स्तोमो अश्विनावजीगः ॥
३,५८,४; २२९ इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ।
४,४५,१-२; २३७-२३८ एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि । पृक्षासो अस्मिन् मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥
उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु । अपोर्णुवन्तस्तम आ परीवृतं स्वर्ण शुक्रं तन्वन्त आ रजः ॥
१,९२,१८; ५२
४,४५,४; २४० ( अश्विनोः अश्वासः ) उषर्बुधः ।
५,७५,९; २८६ अभूदुषा रुशत् पशुराग्निरधाय्यृत्वियः । अयोजि वां वृषण्वसू रथः ।
५,७६,१; २८७ आ भात्यग्निरुषसामनीकम् उद् विप्राणां देवया वाचो अस्थुः । अर्वाञ्चा नूनं रथ्येह यातम् ।
६,६२,१; ३०६ या सद्य उस्रा व्युषि ज्मो अन्तान् युयूषतः पर्युरू वरांसि ॥
६,६३,६; ३१२ युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः ।
७,६७,२-३, ३२९-३३० अशोच्यग्निः समिधानो अस्मे उपो अदृश्रन् तमसश्चिदन्ताः । अचेति केतुरुषसः पुरस्तात् श्रिये दिवो दुहितुर्जायमानः ॥
अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् ।
७,७२,३; ३७० जामि ब्रह्माणि उषसश्च देवीः ।
७,७२,४; ३७१ वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते । ऊर्ध्वं भानुं सविता देवो अश्रेत् बृहदग्नयः समिधा जरन्ते ॥
८,५,२; ३८५ रथेन पृथुपाजसा । सचेथे अश्विनोषसम् ।
८,८,२; ४२२ आ नूनं यातमश्विना रथेन सूर्यत्वचा ॥
८,९,१६-१८ ४५९-४६१ अभुत्स्यु प्र देव्या साकं वाचाहमश्विनोः । व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥
प्र बोधयोषो अश्विना प्र देवि सूनृते महि । प्र यज्ञहोतरानुषक् प्र मदाय श्रवो बृहत् ॥
यदुषो यासि भानुना सं सूर्येण रोचसे । आ हायमश्विनो रथो वर्तिर्याति नृपाय्यम् ॥

८,३५,१-३; ५०९-५११ सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥

४-६; ५१२-५१५ सजोषसा इषं नो वोळ्हमश्विना ॥

७-९; ५१५-५१७ सजोषसा त्रिर्वर्तिर्यातमश्विना ॥

१०-१२; ५१८-५२० सजोषसा ऊर्जं नो धत्तमश्विना ॥

१३-१५; ५२१-५२३ सजोषसा आदित्यैर्यातमश्विना ॥

१६-१८; ५२४-५२६ सजोषसा सोमं सुन्वतो अश्विना ॥

८,३१,१९-२१; ५२७-५२९ सजोषसा अश्विना तिरोअह्न्य

८,७३,१६-१७; ५५५-५५६ अरुणप्सुरुषा अभूदकर्ज्योतिर्ऋतावरी अन्ति षद्भूतु वामवः ॥ अश्विना सुविचाकशत् वृक्षं परशुमाँ इ अन्ति षद्भूतु वामवः ॥

१०,३९,१२; ५९४ यस्य [ रथस्य ] योगे दुहिता जायते दि उभे अहनी सुदिने विवस्वतः ॥

# ( ७ ) अश्विनोः मन्त्रेषु व्यक्तिनामानि ।

अंशुः स्तोता । ८,५,२६; ४०९

अगस्त्यः स्तोता । १,१८०,८; १८२ । १८४,५; २१२ । ८,५,२६; ४०९

अघश्वः अवितः । ( पेदुनामा राजर्षिः ) १,११६,६; ८२

अङ्गिराः स्तोता । १,११२,१८; ६९

अत्रिः द्रष्टा । ५,५३,६-७; २६३-२६४ । ७४,१; २६८ । १०,१४३,१-३; ६२७-६२९ । ( अवितः ) १,११२,७,१६; ५८,६७ । ११६,८; ८४ । ११७,३; १०४ । ११८,७; १३३ । ११९,६; १४३ । १८०,४; १७८ । १८३, ५; २०६ । ७,६८,५; ३४२ । ७१,५; ३६६ । ८,५, २५; ४०८ । ३५,१९; ५२७ । ( स्तोता ) ८,४२,५; ५३४ । ७३,३,७-८; ५४२,५४६-५४७ । १०,३९,९; ५९१ । ५,७८,४; ३००

अध्रिगुः राजा । १,११२,२०; ७१ । ८,२२,१०; ४८१

अनुः स्तोता । ८,१०,५; ४६९

अन्तकः राजर्षिः अवितः । १,११२,६; ५७

अवस्युः द्रष्टा । ५,७५,८; २८५

आजमीळ्हासः द्रष्टारः । ४,४४,६; २१६

आर्चत्कः शरः अवितः । १,११६,२२; ९८

आर्जुनेयः कुत्सः अवितः । १,११२,२३; ७४

उपस्तुतः अवितः । १,११२,१५; ६६ । ८,५,२५; ४०८

ऋज्राश्वः १,११६,१६; ९२ । ११७,१७-१८; ११८-११९ । १२०,६; १५३

ऋतस्तुभ् १,११२,२०; ७१

औचथ्यः मन्त्र-द्रष्टा । १,१५८,१,४; १६९,१७२

औशिजः द्रष्टा । १,१०९,९; १४६

औशिजः कक्षीवान् ( दीर्घतमसः पत्नी उशिक् तस्याः पुत्रः दीर्घश्रवाः ) अवितः । १,११२,११; ६२

कक्षीवान् १,११२,११; ६२ । ११६,७; ८३ । ११७,६; १०७ । १२०,५; १५२ । ( स्तोता ) ८,९,१०; ४५३

कण्वः, कण्वस्य पुत्रः, कण्वासः वा द्रष्टारः । १,४६,९; ३३ । ४७,२,४-५,१०; ४०,४२-४३,४८ । ८,५,४-५, २५; ३८७-३८८,४०६,४०८ । ८,३; ४२३ । ९, ४५७ । १०,२; ४६६

कण्वः अवितः । १,११२,५; ५६ । ११७,८; १०९ । ११८, ७; १३३ । ८,८,२०; ४४०

कर्कन्धुः अवितः । १,११२,६; ५७

कलिः अवितः । १,११२,१५; ६६ । ११,३९,८; ५९०

कविः अवितः । १,११६,१४; ९१ । ११९,७; १४४

काण्वः द्रष्टा । ८,९,३,९; ४४६,४५२

काव्यः स्तोता । १,११७,१२; ११३

कुत्सः अवितः । १,११२,९; ६० । ११२,२३; ७३ । १० ४०,६; ६०२

कृशः अवितः । १०,४०,८; ६०४

कृशानुः अवितः । १,११२,२१; ७२

कृष्णः द्रष्टा । ८,८५,३-४; ५६०-५६१

कृष्णियः विश्वकः अवितः । १,११६,२३; ९९

गृत्समदासः द्रष्टारः । २,३९,८; २२२

गोतमः अवितः । १,११६,९; ८५ । (स्तोता) १,१८३,५; २०

घोषः स्तोता । १,१२०,५; १५२

घोषा अविता । १,११७,७; १०८

घोषा द्रष्ट्री । १०,४०,५; ६०१

च्यवानः अवितः । १,११६,१०; ८६ । ११७,१३; ११४ ११८,६; १३२ । ५,७४,५; २७२ । ७५,५; २८१ ६८,६; ३४३ । ७२,५; ३६६ । १०,३९,४; ५८६

जमदग्निः द्रष्टा । ८,१०१,८; ५७९

जह्नावी अवितः । १,११६,१९; ९५ । ३,५८,६; २३१

जाहुषः अवितः । १,११६,२०; ९६ । ७,७१,५; ३६६

तुग्रः अवितः । १,११७,१४; ११५

तुग्रस्य सूनुः तौग्र्यः भुज्यु अवितः । १,११२,६; ५७ ११२,२०; ७१ । ११६,३-५, ७९-८१ । ११६,१४-१५; ११९-११९ । ११८,६; १३२ । ११९,४,८; १४१,१४५

१,१५८,३; १७१ । १८०,५; १७९ । १८२,५ ७; १९८-२०० । ६,६२,६; ३११ । ७,६८,७; ३४३ । ६९,७, ३५२ । १०,३९,४, ५८५ । ४०,७; ६०३ । १४३,५; ६३१

तुर्वशः स्तोता । ८,९,१४; ४५७ । १०,५; ४६९

तुर्वीतिः अवितः । १,११२,२३; ७४

तृक्षिः त्रासदस्यवः स्तोता । ८,२२,७; ४७८

त्रसदस्युः अवितः । १,११२,१४; ६५; ८,८,२१; ४४१

त्रिमन्तुः ( कक्षीवान् ) अवितः । १,११२,४; ५५

त्रिशोकः अवितः । १,११२,१२, ६३

त्रैतनः ( दासः ) १,१५८,५; १७३

दधीचिः अवितः । १,११६,१२; ८८ । ११७,२२; १२२ । ११९,९; १४६

दभीतिः अवितः । १,११२,२३; ७४

दशव्रजः अवितः । ८,८,२०; ४४०

दिवोदासः अवितः । १,११२,१४; ६५ । ११६,१८; ९४ । ११९,४; १४१

दीर्घतमाः स्तोता । ८,९,१०; ४५३

दीर्घतमाः मामतेयः द्रष्टा । १,१५८,६; १७४

दीर्घश्रवाः ( औशिजः ) अवितः । १,११२,११; ६२

द्रुह्युः स्तोता । ८,१०,५; ४६९

ध्वसन्तिः अवितः । १,११२,२३; ७४

नर्यः अवितः । १,११२,९; ६०

नार्षदः अवितः । १,११७,८; १०९

पक्थः अवितः । ८,२२,१०; ४८१

पज्रासः स्तोता । १,११७,१०; १११

पज्रियः स्तोता । १,१२०,५; १५२

पठर्वा अवितः । १,११२,१७; ६८

परावृज् अवितः । १,११२,८; ५९ । [ ( इन्द्रः ) २,१३,१२, ११४८ । २,१५,७; ११६८ ]

पुरयः दाता । ६,६३,९; ३२५

पुरुकुत्सः अवितः । १,११२,७; ५८

पुरुपन्थाः दाता । ६,६३,१०; ३२६

पुरुमित्रः । १०,३९ ७; ५८९

पुरुमीळ्हः स्तोता । १,१८३,५; २०६

पुरुषन्तिः अवितः । १,११२,२३; ७३

पृथिः अवितः । १,११२,१५; ६६

पृथी ( वैन्यः ) स्तोता । ८,९,१०; ४५३

पृथुश्रवाः अवितः । १,११६,२१; ९७

पृश्निगुः अवितः । १,११२,७; ५८

पेदुः अवितः । १,११६,६; ८२ । ११७,९; ११० । ११८, ९, १३५ । ११९,१०; १४७ । ७,७१,५; ३६६ । १०, ३९,१०; ५९२

पेरुकः दाता । ६,६३,९; ३२५

पौरः स्तोता । ५,७४,४; २७१

प्रियमेधः अवितः । ८,५,२५; ४०८ । स्तोता ८,८७,३; ५७४

बभ्रुः अवितः । ८,२२,१०; ४८१

भरद्वाजः अवितः । १,११२,१३; ६४ । द्रष्टा ६,६३,१०;३२६

भुज्युः द्रष्टव्यं– ' तुग्रस्य सूनुः तौग्र्यः ' ।

भृगवाणः स्तोता । १,१२०,५; १५२

मनुः अवितः । १,११२,१६,१८; ६७,६९ । ८,२२,६; ४७७

मनुः स्तोता । ८,१०,२; ४६६

मन्धाता अवितः । १,११२,१३; ६४

मेधातिथिः अवितः । ८,८,२०; ४४०

यदुः स्तोता । ८,९,१४; ४५८ । १०,५; ४६९

रेभः अवितः । १,११२,५; ५६ । ११६,२४; १०० । ११७,४,१२; १०५,११३ । ११८,६; १३२ । ११९,६; १४३ । १०,३२,९; ५९१

वत्सः स्तोता । ८,८,१५,१९; ४३५,४३९ । ९,१,६,१५; ४४४,४४९,४५८

वध्रिमती अविता । १,११६,१३; ८९ । ११७,२४; १२५ । ६,६२,७; ३१२ । १०,३९,७; ५८९

वन्दनः अवितः । १,११२,५; ५६ । ११६,११; ८७ । ११७,५; १०६ । ११८,६; १३२ । ११९, ६-७; १४३-१४४ । १०,३९,८; ५९०

वम्रः अवितः । १,११२,१५, ६६

वय्यः अवितः । १,११२,६; ५७ । [ ( इन्द्रः ) १,५४,६, ७११ । २,१३,१२,११४८ । ४,१९,६; १५१७ ]

वरुः ८,२६,२; ४९१

वशः अवितः । १,११२,१०; ६१

वसिष्ठः अवितः । १,११२,९; ६० । स्तोता ७,७०,६, ३६० । ७३,३; ३७५

विधवा ( वध्रिमती ) अविता । १०,४०,८; ६०४

विमदः अवितः । १,११२,१९; ७० । ११६,१; ७७ । ११७,२०; ११ । ८,९,१५; ४५८ । १०,३९,७; ५८९ द्रष्टा । १०,२४,४; ५८०

विमनाः स्तोता । ८,८६,१; ५६८

विश्पला अविता । १,११२,१०; ६१ । ११६,१५; ९१ । ११७,११; ११२ । ११८,८; १३४ । १८२,१; १९४ । १०,३९,८; ५९०

विश्वकः द्रष्टा । ८,८६,१-३; ५६७-५६९
विष्णवाप्वः अवितः । ८,८६,३; ५६९
विष्वाचः ( षष्ठी )-ध्वक् असुरः १,११७,१६; ११७
वैन्यः ( पृथी ) अवितः । ८,९,१०; ४१२
वैयश्वः द्रष्टा । ८,२६,११; ५००
व्यश्वः अवितः । १,११२,१५; ६६ । स्तोता ८,९,१०; ४५३ । २६,९; ४९८
शंयुः १,३४,६; १७
शयुः अवितः । १,११२,३,१६; ५४,६७ । ११८;२२; ९८ । ११७,१२,२०; ११३,१२१ । ११८,८; १३४ । ११९,६; १४३ । ६,६२,७; ३१२ । ७,६८,८; ३४१ । १०,३९,१३; ५९५ । ४०,८; ६०४
शरः ( आर्चत्कः ) अवितः । १,११६,२२; ९८
शर्यातः अवितः । १,११२,१७; ६८
शाण्डः दाता । ६,६३,९; ३२५
शुचन्तिः अवितः । १,११२,७; ५८
शुन्ध्यूः अविता । १०,३९,७; ५८९
श्यावः अवितः । १,११७,८,२४; १०९,११५
श्यावाश्वः द्रष्टा । ८,३५,१९-२१; ५२७-५२९
श्रुतर्यः अवितः । १,११२,९; ६०
सप्तवध्रिः द्रष्टा । ५,७८,५-६; ३०१-३०२
सप्तवध्रिः अवितः । ८,७३,९; ५४८ । १०,३९,९; ५९
साहदेव्यः द्रष्टा । ४,१५,१०; २३६
साहदेव्यः सोमकः द्रष्टा । ४,१५,९; २३५
सुदाः अवितः । १,४७,६; ४४ । ११२,१९; ७०
सुमीळ्हः दाता । ६,६३,९; ३२५
सुषामा अवितः । ८,२६,२; ४९१
सुहस्त्यः द्रष्टा । १०,४१,३; ६१३
सोभरिः स्तोता । ८,५,२६; ४०९ । द्रष्टा ८,२२,१,१ ४७३,४८६
सोमकः साहदेव्यः द्रष्टा । ४,१५,९; २३५
स्यूमरश्मिः अवितः । १,११२,१६; ६७
हिरण्यहस्तः अवितः । १,११७,२४; ११५

## अश्विनौ-देवता--मन्त्रेषु अन्याः--देवताः ।

अग्निः १,११२,१ ( द्वितीयः पादः ) ५२ । ५,७५,९; २८६। ७६,१; २८७ । ७,६७,२; ३१९, । ७२,४; ३७१ । ८,३५,१; ५०९
अङ्गिराः ८,३५,१३; ५२१
अदितिः १,११२,२५; ७६
अद्रिः ८,३५,२, ५१०
अर्यमा ८,२६,११; ५००
अश्वाः ( अश्विनोः ) १,१८१,२; १८६
अश्विरथः १,११९,१-३; १३८-१४० । १२०,१०-११; १५७-१५८ । १५७,३; १६५ । १८०,१०; १८४ । १८१,३; १८७ । ४,४३,२; २४५ । १०,४१,१; ६११
आदित्यः १,४६,४; २७
आदित्याः ६,६२,८; ३१३ । ८,३५,१; ५०९
आपः ८,३५,३; ५११
इन्द्रः ८,३५,१; ५०९
इन्द्राविष्णू ८,१०,२; ४६६
इष्टका वा० य० १४,१-५; ६३४-६३८
ऋतु- ( सहितौ ) १,१५,११; ४
उषाः १,४६,१,१४; २४,२७ । ५,७५,९; २८६ । ७६,१; २८७ । ७,७२,३-४; ३००-३०१ । [illegible]
९,१६-१८; ४५९-४६१ । ७३,१६; ५५५
उषःसूर्यसहितौ अश्विनौ ८,३५,१-२१; ५०९-५२९
ऋभवः ८,३५ १५; ५२३
कः ४,४३,१; २४३
चन्द्रादित्यौ १,१८१,४; १८८
तपाः २,३७,५; २१४
दीर्घतमाः १,१५८,६; १७४
देवाः ( त्रयस्त्रिंशत् ) १,३४,११; २२
द्यौः १,११२,२५; ७६ । ८,३५,२; ५१०
द्यावापृथिव्यौ १,११२,१ ( प्रथमः पादः ); ५२ । ६,६२, ३१३ । ७,७२,३; ३७०
धर्मः ८,३५,१३; ५२१
धियः विश्वाः ८,३५,२; ५१०
पतयः १०,४०,१०; ६०९
पृथिवी १,११२,२५; ७६ । ८,३५,२; ५१०
प्रजापतिः वा० य० २०,६७-६९; ६५६-६५८ । ११,४८-५ ६५९-६६९
बृहस्पतिः ८,१०,२; ४६६
भुवनम् ८,३५,२; ५१०
[illegible] ८,३५,३; ५११

मरुतः ६,६२,८; ३१३ । ८,३५,३,१३-१५; ५११, ५२१-५२३

मित्रः १,११२,२५; ७६ । ६,६२,९; ३१४ । ८,२६,११; ५००

मित्रावरुणौ ८,३५,१३; ५२८

रथः अश्विनोः-द्रष्टव्यः 'अश्विरथः'

रुद्राः ८,३५,१; ५०९

रुद्रियाः ६,६२,८; ३१३

रोदसी ६,६२,८; ३१३

वरुणः १,११२,२५; ७६ । ६,६२,९; ३१४ । ८,२६,११; ५०० । ३५,१; ५०९

वसवः ६,६२,८; ३१३ । ८,३५,१; ५०९

विश्वा धियः ८,३५,२; ५१०

विश्वे देवाः ८,१०,२; ४६६ । ३५,३; ५११

विष्णुः ८,३५,१,१३; ५०९,५२१

सप्तवध्रिः ८,७३,१८; ५५७

सरस्वती वा० य० २०,६७-६९; ६५६-६५८। २१,४८-५८; ६५९-६६९

सिन्धवः १,११२,२५; ७६

सविता १,१५७,१; १६३ । ७,७१,५; ३०१

सूर्यः ७,६७,२; ३२९

सूर्यसहितौ उषसा च ८,३५,१-२१; ५०९-५२९

सोमः वा० य० १९,३४; ६५४

सोमरसः वा० य० १९,३५; ६५५

## ( १ ) निर्विशेषितत्वेन* वर्णितं अश्विनोः अवनकर्म ।

अत्रिः ८,५,२५; ४०८ । [ द्रष्टव्यम् '( ५ ) परकृतविविधापद्भ्यः अवनम् । ' ]

अध्रिगुः १,११२,२०; ७१ । ८,२२,१०; ४८१

उपस्तुतः १,११२,१५; ६६ । ८,५,२५; ४०८

कक्षीवान् ( स्तोता ) १।११२,११; ६२

कण्वः ( प्रसिषासन् ) ८,५,२५; ४०८ । ८,२०; ४४० । [ द्रष्टव्यम् '( ५ ) परकृतविविधापद्भ्यः अवनम् ' ]

कर्कन्धुः १,११२,६; ५७

कलिः ( वित्तजानिः ) १,११२,१५; ६६ । [ द्रष्टव्यम् '( ६ ) भिषक्कर्मणा अवनम् । ' ]

कुत्सः १,११२,९; ६०

कुत्सः आर्जुनेयः १,११२,२३; ७४

कृशः १०,४०,८; ६०४

गोशर्यः ८,८,२०; ४४०

तुर्वीतिः १,११२,२३; ७४ ×

दभीतिः १,११२,२३; ७४

ध्वसन्तिः १,११२,२३; ७४

नर्यः १,११२,९; ६० ×

पक्थः ८,२२,१०; ४८१

पुरुकुत्सः १,११२,७; ५८

पुरुषन्तिः १,११२,२३; ७४

पृथिः १,११२,१५; ६६

पृश्निगुः १,११२,७; ५८

प्रियमेधः ८,५,२५; ४०८

बभ्रुः ( विजोषस् ) ८,२२,१०; ४८१

भरद्वाजः ( विप्रः ) १,११२,१३; ६४

भुज्युः १०,४०,७; ६०३ । [ द्रष्टव्यम् '( ५ ) परकृतविविधापद्भ्यः अवनम् । ' ]

मेधातिथिः ८,८,२०; ४४०

वम्रः ( विपिपानः ) १,११२,१५, ६६

वय्यः १,११२,६; ५७ ×

वशः अश्व्यः ( प्रेणिः ) १,११२,१०; ६१

वशः दशव्रजः ८,८,२०; ४४०

वशः १०,४०,७; ६०३

वसिष्ठः १,११२,९; ६०

विधवा १०,४०,८; ६०४

व्यश्वः १,११२,१५; ६६

शयुः १०,४०,८; ६०४। [ द्रष्टव्यम् '( ७ ) अन्येषां प्राणिनां अवनम् । ' ]

शिञ्जारः ८,५,२५; ४०८+ । १०,४०,७; ६०३

श्रुतर्यः १,११२,९; ६०

---

* 'यथा चित्कण्वमावतम्' 'याभिर्व्यश्वमुत पृथिमावतम्' इति एतादृशमन्त्रैः वर्णितम् ।

× द्रष्टव्यम् 'त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो । ' (इन्द्रः०) १,५४,६; ७९१ 'अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् । ' ( इन्द्रः० ) २,१३,१२; ११४८ 'त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम् । अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिन्द्र सिन्धून् । ' ( इन्द्रः० ) ऋ० ४,१९,६; १५२७ ।

+ अत्र सायनाचार्याः 'शिञ्जारः' इति शब्दस्य शब्दयन्, स्तुवन् इत्यर्थं दत्त्वा अयं शब्दः अत्रेर्विशेषणं इति मन्यन्ते ।

## ( २ ) इष्टवस्तुप्रदानेन अवनम् ।

### धनम् ।

अंशुः　८,५,२६;　४०९ यथोत कृत्व्ये धने अंशुम् ( आवतम् ) ।

त्रसदस्युः　८,८,२१;　४४१ याभिर्नरा त्रसदस्युं आवतं कृत्व्ये धने ।

त्रासदस्यवः तृक्षिः　८,२२,७;　४७८ येभिः ( ऋतस्य पाथिभिः ) तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ।

दिवोदासः　१,११६,१८;　९४ यदयातं दिवोदासाय वर्तिः भरद्वाजायाश्विना हयन्ता । रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता॥

विमनाः　८,८६,१;　५६८ कथा नूनं वां विमना उप स्तवद् युवं धियं ददथुः वस्य इष्टये ।

विष्णापूः　८,८६,३;　५६९ युवं हि ष्मा पुरुभुजा इमं एधतुं विष्णाप्वे ददथुः वस्य इष्टये ।

सुदाः　१,११२,१९;　७० याभिः सुदासे ऊहथुः सुदेव्यम् ।

सुषामा　८,२६,२;　४९१ युवं वरो सुषाम्णे महे तने नासत्या ।

वशः　१,११२,१०;　६१ याभिर्वशमश्व्यं प्रेणिं आ-वतम् ।

　१,११६,२१;　९७ एकस्या वस्तोः आवतं रणाय वशमश्विना सनये सहस्रा ।

　८,८,२०;　४४० याभिः वशं दशव्रजं ... आवतं कृत्व्ये धने ।

　१० ४०,७;　६०३ युवमश्विना वशं...उपारथुः।

जह्नावी　३,५८,६;　२३१ युवोर्नरा द्रविणं जह्नाव्याम्।

　१,११६,१९;　९५ रयिं सुक्षत्रं स्वपत्यं आयुः सुवीर्यं नासत्या वहन्ता । आ जह्नावीं समनसोप वाजैः त्रिरह्नो भागं दधतीमयातम्।

### अन्नम् ।

मनुः　१,११२,१६;　६७ मनवे पुरा गातुमीषथुः ।

　१,११२,१८;　६९ मनुं शूरं इषा समावतम् ।

　१,११७,२१;　११२ इषं दुहन्ता मनुषाय दस्रा यवं वृकेणाश्विना वपन्ता

　८,२२,६;　४७७ दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।

　८,१०,२;　४६६ यद् वा यज्ञं मनवे संमिमिक्षथुः ।

विप्रः　१,११७,११;　१११ सूनोर्मानेन अश्विना गृणाना वाजं विप्राय भुरणा रदन्ता

सोभरिः　८,५,२६;　४०९ यथा वाजेषु सोभरिं ( आवतम् ) ।

### सदः ।

शुचन्तिः　१,११२,७;　५८ याभिः शुचन्तिं धनसां सुषंसदम् ।

### क्षेत्रपतित्वादि ।

मन्धाता　१,११२,१३;　६४ मन्धातारं क्षैत्रपत्येषु आवतम् ।

जाहुषः　७,७१,५;　३३६ नि जाहुषं शिथिरं धातमन्तः

　१,११६,२०;　९६ परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः

### स्त्री ।

कलिः　१,११२,१५;　६६ याभिः कलिं वित्तजानिं दुवस्यथः ।

　१०,३९,८;　५९० युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद् वयः

श्यावः　१,११७,८;　१०९ युवं श्यावाय रुशतीं अदत्तम्

　१,११७,२४;　१२५ त्रिधा ह श्यावमश्विना वि कस्तमुज्जीवस ऐरयतं सुदानू

विमदः　१,११२,१९;　७० याभिः पत्नीर्विमदाय न्यूहथुः

　१,११६,१;　७७ यावर्भगाय विमदाय जायां सेनाजुवा न्यूहथू रथेन ।

　१,११७,२०;　१२१ युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम्

　१०,३९,७;　५८९ युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम्

　८,९,१५;　४५८ यन्नासत्या पराके अर्वाके अस्ति भेषजम् । तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥

विमदः (मन्त्रद्रष्टा) १०,२४,४; ५८० युवं शक्रा मायाविना समीची निरमन्थतम् । विमदेन यदीळिता नासत्या निरमन्थतम् ॥

**पतिः ।**

घोषा १,११७,७; १०८ घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ।

१०,४०,९; ६०५ जनिष्ट योषा पतयत् कनीनको वि चारुहन् वीरुधो दंसना अनु । आस्मै रीयन्ते निवनेव सिन्धवोऽस्मा अह्ने भवति तत् पतित्वनम् ॥

**पुत्रः ।**

कृष्णियः १,११६,२३; ९९ अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः । पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथु विश्वकाय ॥

१,११७,७; १०८ युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुः विश्वकाय ।

वध्रिमती १,११६,१३; ८९ अजोहवीन्नासत्या करा वां महे यामन् पुरुभुजा पुरन्धिः । श्रुतं तत् शासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥

१,११७,२४; १२५ हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।

६,६२,७; ३८२ श्रुतं हवं वृषणा वध्रिमत्याः ।

१०,३९,७; ५८९ युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरन्धये ।

**गावः ।**

अगस्त्यः ८,५,२६; ४०९ यथा गोषु अगस्त्यम् ( आवतम् । )

त्रिशोकः १,११२,१२; ६३ याभिः त्रिशोकः उस्रिया उदाजत ।

**अश्वः ।**

पेदुः १,११६,६; ८२ यदश्विना ददथुः श्वेतमश्वं अघाश्वाय शश्वदित् स्वस्ति । तद् वां दात्रं महि कीर्तेन्यं भूत् पैद्वो वाजी सदमिद्धव्यो अर्यः ॥

१,११७,९; ११० पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् । सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥

१,११८,९; १३५ युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् । जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥

१,११९,१०; १४७ युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः । शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥

७,७१,५; ३६६ नि पेदव ऊहथुराशुमश्वम् ।

१०,३९,१०; ५९२ युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनम् । चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् ॥

# ( ३ ) क्षुद्र-पीडानिवारणम् ।

अन्तकः १,११२,६; ५७ याभिः अन्तकं जसमानं आऽरणे... जिजिन्वथुः ।

वम्रः १,११२,१५; ६६ याभिः वम्रं विपिपानं... दुवस्यथः ।

शरः १,११६,२२; ९८ शरस्य चिद् आर्चत्कस्याव-तादा नीचादुच्चा चक्रथुः पातवे वाः ।

अंशः १,११२,१; ५१ याभिः भरे कारं अंशाय जिन्वथः ।

*

ऋतस्तुभ् १,११२,२०; ७१ ओम्यावतीं सुतरा ऋतस्तुभम् ।

ददाशुः १,११२,२०; ७१ याभिः शन्ताती भवथः ददाशुषे ।

धीः-प्रवृत्तिः १,११२,२, ५३ याभिः धियः अवथः कर्मन्निष्टये ।

त्रिमन्तुः १,११२,४; ५५ याभिः त्रिमन्तुः अभवत् विचक्षणः ।

## ( ४ ) संग्रामे शत्रुहननेन रक्षणम् ।

आर्यः १,११७,२१; १२२ अभि दस्युं बकुरेणा धमन्ता उरु ज्योतिश्चक्रुः आर्याय ।

कृशानुः १,११२,२१; ७२ याभिः कृशानुं असने दुवस्यथः ।

त्रसदस्युः १,११२,१४; ६५ याभिः पूर्भिद्ये त्रसदस्युं आवतम् । [ धनप्रदानं-द्रष्टव्यं । ८,८,२१; ४४१ ]

दिवोदासः १,११२,१४; ६५ याभिः दिवोदासं शम्बरहत्य आवतम् ।

नरः १,११२,२२; ७३ याभिः नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।

याभी रथान् अवथः याभिः अर्वतः ।

पठर्वा १,११२,१७; ६८ याभिः पठर्वा जठर... मज्मनाग्निर्नादीदेच्चित ... अज्मन्ना ।

पृथुश्रवाः १,११६,२१; ९७ निरहतं दुच्छुना इन्द्रव... पृथुश्रवसो वृषणावरातीः ।

शर्यातः १,११२,१७; ६८ याभिः शर्यातं अवथः महाध...

स्यूमरश्मिः १,११२,१६; ६७ याभिः शारीः आजतं स्यू...रश्मये ।

१,११६,२; ७८ वीळुपत्मभिः आशुहेमभि... देवानां वा जूतिभिः शाशदा... तद् रासभो नासत्या सह... आजा यमस्य प्रधने जिगाय ।

१,११७,१६; ११० जातं विष्वाचो अहतं विषे...

१,११२,१२; ६३ अनश्वं याभी रथामावतं जि...

## ( ५ ) परकृताविविधापद्भ्यः अवनम् ।

अत्रिः १,११२,७; ५८ याभिः ...तप्तं घर्ममोम्याव-न्तमत्रये...आवतम् ।

१,११२,१६; ६७ याभिर्नरा ... अत्रये...... गातुमीषथुः ।

१,११६,८; ८४ हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीत-मुन्निन्यथुः सर्वगणं स्वस्ति ॥

१,११७,३; १०४ ऋषिं नरावंहसः पाञ्चजन्य-मृबीसादत्रिं मुञ्चथो गणेन । मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥

१,११८,७; १३३ युवमत्रयेऽवनीताय तप्तमूर्ज-मोमानमश्विनावधत्तम् ।

१,११९,६; १४३ युवं ... उरुष्यथः हिमेन घर्मं परितप्तमत्रये ।

१,१८०,४; १७८ युवं ह घर्मं मधुमन्तमत्रये-ऽपो न क्षोदोऽवृणीतमेषे ।

१,१८३,५; २०६ युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हवि-ष्मान् ।

५,७३,६; २६३ युवोरत्रिश्चिकेतति नरा सुम्ने...चेतसा । घर्मं यद् वामरेपसं नासत्यास्ना भुरण्यति ।

५,७३,७; २६४ उग्रो ह वां ककुहो या... शृण्वे यामेषु सन्तनिः । यद् वां दंसोभिरश्विनाऽत्रिर्न... रावर्तति ॥

५,७४,१; २६८ अत्रिर्वामा विवासति ।

७,६८,५; ३४२ चित्रं ह यद्वां भोजनं न्वस्ति न्यत्रये महिष्वन्तं युयोतम् । यो वामोमानं दधते प्रियः सन् ॥

७,७१,५; ३६६ निरंहसस्तमसः स्पर्तमत्रिम् ।

८,५,२५; ४०८ यथा चित्कण्वमावतं प्रियमेध... मुपस्तुतम् । अत्रिं शिञ्जार... मश्विना ॥

श्यावाश्व (आत्रेयः) ८,३५,१९; ५२७ अत्रेरिव शृणुतं पूर्व्यस्तुतिं श्यावाश्वस्य सुन्वतो मद... च्युता ।

अर्चनाना (आत्रेयः) ८,४२,५; ५३४ यथा वामत्रिरश्विना गीर्भि... र्विप्रा अजोहवीत् ।

गोपवन (आत्रेयः) ८,७३,३; ५४१ उप स्तृणीतमत्रये हिमेन घर्ममश्विना । अन्ति षद्भूतु वामवः ॥

८,७३,७; ५४६ अवन्तमत्रये गृहं कृणुतं युवमश्विना । अन्ति षद्भूतु वामवः ॥

८,७३,८; ५४७ वरेथे अग्निमातपो वदते वल्ग्वत्रये । अन्ति० ... ॥

५,७८,४; ३०० अत्रिर्यद् वामवरोहन्नृबीस-मजोहवीन्नाधमानेव योषा । श्येनस्य चिज्जवसा नूतनेना-ऽऽगच्छतमश्विना शन्तमेन ॥

१०,३९,९; ५९१ युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्त वध्रये ।

अत्रिः सांख्यः १०,१४३,१; ६२७ त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे ।

१०,१४३,२; ६२८ त्यं चिदश्वं न वाजिनमरेणवो यमत्नत । दृळ्हं ग्रन्थिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥

१०,१४३,३; ६२९ नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः ।

कण्वः १,४७,५; ४३ याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।

१,११२,५; ५६ याभिः कण्वं प्र सिषासन्तमावतम् ।

१,११७,८; १०९ युवं ... अदत्तं महः क्षोणस्याश्विना कण्वाय ।

१,११८,७; १३३ युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ।

८,५,२३; ४०६ युवं कण्वाय नासत्याऽपिरिप्ताय हर्म्ये । शश्वदूतीर्दशस्यथः ॥

८,५,२५; ४०८ यथा चित् कण्वमावतम् ।

८,८,२०; ४४० याभिः कण्वं मेधातिथिं ... आवतम् ।

जाहुषः १,११६,२०; ९६ परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तं ऊहथुः रजोभिः ।

७,७१,५; ३६६ नि जाहुषं शिथिरे धातमन्तः ।

दीर्घतमा (औचथ्यः) १,१५८,४; १७२ उपस्तुतिरौचथ्यमुरुष्येत् मा मामिमे पतत्रिणी वि दुग्धाम् । मा मामेधो दशतयश्चितो धाक् प्र यद् वां बद्धस्त्मनि खादति क्षाम् ॥

१,१५८,५; १७३ न मा गरन् नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः । शिरो यदस्य त्रैतनो वितक्षत् स्वयं दास उरो अंसावपि ग्ध ॥

रेभः १,११२,५; ५६ याभी रेभं निवृतं सितमद्भ्यः ... । ताभिरू षु ऊतिभिरश्विना गतम् ।

१,११६,२४; १०० दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः । विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥

१,११७,४; १०५ अश्वं न गूळ्हमश्विना दुरेवैर्ऋषिं नरा वृषणा रेभमप्सु । सं तं रिणीथो विप्रुतं दंसोभिर्न... ॥

१,११७,१२; ११३ हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥

१,११८,६; १३२ उद् रेभं दस्रा वृषणा शचीभिः ।

१,११९,६; १४३ युवं रेभं परिषूतेरुरुष्यथः ।

१०,३९,९; ५९१ युवं ह रेभं वृषणा गुहाहितमुदैरयतं ममृवांसमश्विना ॥

वन्दनः १,११२,५; ५६ याभिः [ ऊतिभिः ] उद् वन्दनमैरयतं स्वर्दृशे ।

१,११६,११; ८७ तद् वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् । यद् विद्वांसा निधिमिवापगूळ्हमुद् दर्शतादूपथुर्वन्दनाय ॥

१,११७,५; १०६ सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् । शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥

१,११८,६; १३२ उद् वन्दनमैरतं दंसनाभिः ।

१,११९,६; १४३ प्र दीर्घेण वन्दनस्तार्यायुषा ॥
१,११९,७; १४४ युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः॥
१०,३९,८; ५९० युवं वन्दनमृश्यदादुदूपथुः ।
भुज्युः तौग्र्यः १,११२,६; ५७ भुज्युं याभिः [ ऊतिभिः ] अव्यथिभिर्जिजिन्वथुः ।
१,११२,२०; ७१ भुज्युं याभिः ( ऊतिभिः ) अवथः ।
१,११६,३-५; ७९-८१ तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभि रन्तरिक्षप्रुद्भिरपोदकाभिः ॥ तिस्रः क्षपस्त्रिरहातिव्रजद्भि-र्नासत्या भुज्युमूहथुः पतङ्गैः । समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे । यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥
१,११७,१४; ११५ युवं भुज्युमर्णसो निः समुद्राद् विभिरूहथुर्ऋज्रेभिरश्वैः ॥
१,११७,१५; ११६ अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् । निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥
१,११८,६; १३२ निष्टौग्र्यं पारयथः समुद्रात् ।
१,११९,४; १४१ युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ । यासिष्टं वर्तिर्वृषणा विजेन्यम्... ।
१,११९,८; १४५ अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
१,१५८,३; १७१ युक्तो ह यद् वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः।
१,१८०,५; १७९ आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।

१,१८२,५-७; १९८-२०० युवमेतं चक्रथुः सि[न्धुषु] प्लवमात्मन्वन्तं पक्षिणं [तौ]ग्र्याय कम् । येन दे[वत्रा] मनसा निरूहथुः सुप[प्तनी] पेतथुः क्षोदसो महः ॥ [अव]विद्धं तौग्र्यमप्स्वन्तर[नार]म्भणे तमसि प्रविद्ध[म् ।] चतस्रो नावो जठलस्य [जुष्टा] उदश्विभ्यामिषिताः पा[रय]न्ति ॥ कः स्विद् [वृक्षो] निष्ठितो मध्ये अर्णसो [यं] तौग्र्यो नाधितः पर्यष[स्व]जत् । पर्णा मृगस्य पत[रो]रिवारभ उदश्विना ऊ[हथुः] श्रोमताय कम् ॥
६,६२,६; ३११ ता भुज्युं विभिरद्भ्यः स[मु]द्रात् तुग्रस्य सूनुमूहथू र[जो]भिः । अरेणुभिर्योजनेभि[र्भु]जन्ता पतत्रिभिरर्णसो नि[रु]पस्थात् ॥
७,६८,७; ३४४ उत त्यं भुज्युमश्विना सखा[यो] मध्ये जहुर्दुरेवासः समुद्रे। निरीं पर्षदरावा यो युवाकुः
७,६९,७; ३५३ युवं भुज्युमवविद्धं स[मुद्र] उदूहथुरर्णसो अस्रिधानैः। पतत्रिभिरश्रमैरव्यथिभिर्दं[सना]भिरश्विना पारयन्ता ॥
८,५,२२; ४०१ कदा वां तौग्र्यो विध[त्] समुद्रे जहितो नरा । [यद्] वां रथो विभिष्पतात् ॥
१०,३९,४; ५८६ निष्टौग्र्यमूहथुरद्भ्यस्परि।
१०,४०,७; ६०३ युवं ह भुज्युं...उपारथुः।
१०,१४३,५; ६३१ युवं भुज्युं समुद्र आ रजस: पार ईङ्खितम् । यातम[च्छा] पतत्रिभिर्नासत्या सात[ये] कृतम् ॥
सप्तवध्रिः ५,७८,५; ३०१ वि जिहीष्व वनस्पते योनि[ः] सूष्यन्त्या इव । श्रुतं [मे] अश्विना हवं सप्तवध्रिं [च] मुञ्चतम् ॥

५,७८,६; ३०१ भीताय नाधमानाय ऋषये सप्तवध्रये । मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥

८,७३,९; ५४८ प्र सप्तवध्रिराशसा धारामग्ने-रशायत ।

१०,३९,९; ५९१ ओमन्वन्तं चक्रथुः सप्तवध्रये ।

८,२२,१२; ४८३ 'याभिः क्रिविं वावृधुः'।

[ वन्दनपीडानिवारणार्थं एतत् कर्म इति केचित् ]

## ( ६ ) भिषक्कर्मणा अवनम् ।

श्यामः १,११७,२३; १२० मही वामूतिरश्विना मयोभूः उत श्यामं धिष्ण्या सं रिणीथः ।

नार्षदः १,११७,८; १०९ प्रवाच्यं तद् वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ।

परावृज् १,११२,८; ५९ याभिः शचीभिः वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः । +

कविः १,११६,१४; ९० उतो कविं पुरुभुजा युवं ह कृपमाणं अकृणुतं विचक्षे ।

ऋज्राश्वः १,११६,१६; ९२ शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार । तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ।

१,११७,१७; ११८ शतं मेषान् वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा । आक्षी ऋज्राश्वे अश्विनावधत्त ज्योतिरन्धाय चक्रथुर्विचक्षे ॥

१,११७,१८; ११९ शुनमन्धाय भरमह्वयत् सा वृकीरश्विना वृषणा नरेति । जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥

१,१२०,६; १५३ श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् । आक्षी शुभस्पती दन् ॥

विश्पला १,११२,१०; ६१ याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम् ।

१,११६,१५; ९१ चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् । सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ।

१,११७,११; ११२ सं विश्पलां नासत्यारिणीतम् ।

१,११८,८; १३४ प्रति जङ्घां विश्पलाया अधत्तम् ।

१,१८२,१; १९४ विश्पलावसू दिवो नपाता ।

१०,३९,८; ५९० युवं सद्यो विश्पलामेतवे कृथः ।

दधीचिः १,११६,१२; ८८ तद् वां नरा सनये दंस उग्रं आविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥

१,११७,२२; १२३ आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्र वोचदृतायन् त्वाष्ट्रं यद् दस्रावपिकक्ष्यं वाम् ।

१,११९,९; १४६ युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ।

च्यवनः १,११६,१०; ८६ जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् । प्रातिरतं जरितस्यायुर्दस्रादित पतिमकृणुतं कनीनाम् ॥

१,११७,१३; ११४ युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।

१,११८,६; १३२ पुनश्च्यवानं चक्रथुर्युवानम् ॥

५,७४,५; २७२ प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुञ्चथः । युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥

५,७५,५; २८२ विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवम् ॥

+द्रष्टव्यम्- 'नीचा सन्तमुदनयः परावृजं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः (इन्द्रः)। २,१३,१२; ११४८। स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत् परावृक् । प्रति श्रोणः स्थाद् व्यनगचष्ट सोमस्य ता मद इन्द्रश्चकार।' (इन्द्रः) २,१५,७; ११६८।

॥ ३१५ ॥ ( अथर्व० ७।९९।१ )

अथर्वा । वेदी । भुरिक् । त्रिष्टुप् ।

परि॑ स्तृणीहि॒ परि॑ धेहि॒ वेदिं॒ मा जा॒मिं मो॑षीरमु॒या शया॑नाम् ।
हो॒तृ॒षद॑नं॒ हरि॑तं हिर॒ण्यय॑ं नि॒ष्का ए॒ते यज॑मानस्य लो॒के १ २२५६

॥ ३१६ ॥ ( ऋ० १।३६।१३-१४ )

कण्वो घौरः । ( अग्निः ) यूपः । प्रगाथः [ विषमा बृहती+समा सतोबृहति ] ( १३ उपरिष्टाद्बृहती। ऐ. ब्रा. २।२ चरणच्छेदः ) ।

ऊ॒र्ध्व ऊ॒ षु ण॑ ऊ॒तये॒ तिष्ठा॑ दे॒वो न स॑वि॒ता ।
ऊ॒र्ध्वो वाज॑स्य॒ सनि॑ता॒ यद॒ञ्जिभि॑र्वा॒घद्भि॑र्वि॒ह्वया॑महे १३
ऊ॒र्ध्वो नः॑ पा॒ह्यंह॑सो॒ नि के॒तुना॒ विश्वं॒ सम॒त्रिणं॑ दह ।
कृ॒धी न॑ ऊ॒र्ध्वाञ्च॒रथा॑य जी॒वसे॒ वि॒दा दे॒वेषु॑ नो॒ दुवः॑ १४ २२५८

॥ ३१७ ॥ ( ऋ० ३।८।१-१० )

गाथिनो विश्वामित्रः । यूपः, ६-१० यूपाः, ८ विश्वे देवा वा । त्रिष्टुप्; ३,७ अनुष्टुप् ।

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न ।
यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ताद्॒ यद्॑ वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑ १
समि॑द्धस्य॒ श्रय॑माणः पु॒रस्ता॒द् ब्रह्म॑ वन्वा॒नो अ॒जरं॑ सु॒वीर॑म् ।
आ॒रे अ॒स्मदम॑तिं॒ बाध॑मान॒ उच्छ्र॑यस्व मह॒ते सौभ॑गाय २ २२६०
उच्छ्र॑यस्व वनस्पते॒ वर्ष्म॑न् पृथि॒व्या अधि॑ ।
सुमि॑ती मी॒यमा॑नो॒ वर्चो॑ धा य॒ज्ञवा॑हसे ३
युवा॑ सु॒वासाः॒ परि॑वीत॒ आगा॒त् स उ॒ श्रेया॑न् भवति॒ जाय॑मानः ।
तं धीरा॑सः क॒वय॒ उन्न॑यन्ति स्वा॒ध्यो॒३ मन॑सा देव॒यन्तः॑ ४
जा॒तो जा॑यते सुदिन॒त्वे अह्नां॑ समर्य आ वि॒दथे॒ वर्ध॑मानः ।
पु॒नन्ति॒ धीरा॑ अ॒पसो॑ मनी॒षा दे॑व॒या विप्र॒ उदि॑यर्ति॒ वाच॑म् ५
यान् वो॒ नरो॑ देव॒यन्तो॑ निमि॒म्युर्वन॑स्पते॒ स्वधि॑तिर्वा त॒तक्ष॑ ।
ते दे॒वासः॒ स्वर॑वस्तस्थि॒वांसः॑ प्र॒जाव॑द॒स्मे दि॑धिषन्तु॒ रत्न॑म् ६
ये वृ॒क्णासो॒ अधि॒ क्षमि॒ निमि॑तासो य॒तस्रु॑चः ।
ते नो॑ व्यन्तु॒ वार्यं॑ देव॒त्रा क्षे॑त्र॒साध॑सः ७ २२६५
आ॒दि॒त्या रु॒द्रा वस॑वः सु॒नी॒था द्यावा॒क्षामा॑ पृथि॒वी अ॒न्तरि॑क्षम् ।
स॒जोष॑सो य॒ज्ञम॑वन्तु दे॒वा ऊ॒र्ध्वं कृ॑ण्वन्त्वध्व॒रस्य॑ के॒तुम् ८ २२६६

हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद् देवा देवानामपि यन्ति पाथः ९
शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रे चषालवन्तः स्वरवः पृथिव्याम् ।
वाघद्भिर्वा विहवे श्रोषमाणा अस्माँ अवन्तु पृतनाज्येषु १० २२६८

॥ ३१८ ॥ ( वा० य० ६।२-३,६ )

( यूपः । )

अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः ।
द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः २
या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ।
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ।
ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ३ २२७०
परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणाम् ।
दिवः सूनुरस्येष ते पृथिव्याँल्लोक आरण्यस्ते पशुः ६ २२७१

॥ ३१९ ॥ ( वा० य० २१।४६ )

( यूपः । )

होता यक्षद् वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित । यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविषः प्रिया धामानि यत्राग्नेः प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य सुत्राम्णः प्रिया धामानि यत्र सवितुः प्रिया धामानि यत्र वरुणस्य प्रिया धामानि यत्र वनस्पतेः प्रिया पाथाꣳसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतान् प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयस इव कृत्वी करदेवं देवो वनस्पतिर्जुषताꣳ हविर्होतर्यज ४६ २२७२

॥ ३२० ॥ ( वा० य० २८।२० )

( यूपः । )

देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत् ।
दिवमग्रेणास्पृक्षदान्तरिक्षं पृथिवीमदृꣳहीद् वसुवने वसुधेयस्य वेतु यज २० २२७३

॥ ३२१ ॥ ( अथर्व० ७।९८।१ )

अथर्वा। इन्द्रः, विश्वे देवाः ( हविः )। विराट् त्रिष्टुप्।

सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना सं मरुद्भिः।
सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा ॥ १ २१७४

॥ ३२२ ॥ ( ऋ० १०।१३।१-५ )

आङ्गिर्हविर्धानः विवस्वानादित्यो वा। हविर्धाने×। त्रिष्टुप्, ५ जगती।

युजे वां ब्रह्म पूर्व्यं नमोभि- र्वि श्लोक एतु पथ्येव सूरेः।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १ २१७५
यमे इव यतमाने यदैतं प्र वां भरन् मानुषा देवयन्तः।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ २
पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन।
अक्षरेण प्रति मिम एता- मृतस्य नाभावधि सं पुनामि ॥ ३
देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत।
बृहस्पतिं यज्ञमकृण्वत ऋषिं प्रियां यमस्तन्वं प्रारिरेचीत् ॥ ४
सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतम्।
उभे इदस्योभयस्य राजत उभे यतेते उभयस्य पुष्यतः ॥ ५ २१७९

॥ ३२३ ॥ ( ऋ० १।२८।५-८ )

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः। ५-६ उलूखलं, ७-८ उलूखलमुसले।
५-६ अनुष्टुप्, ७-८ गायत्री।

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५ २१८०
उत स्म ते वनस्पते वातो वि वात्यग्रमित्।
अथो इन्द्राय पातवे सुनु सोममुलूखल ॥ ६
आयजी वाजसातमा ता ह्युच्चा विजर्भृतः। हरी इवान्धांसि बप्सता ॥ ७
ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः। इन्द्राय मधुमत् सुतम् ॥ ८ २१८३

॥ ३२४ ॥ ( ऋ० ७।१०४।१७ )

मैत्रावरुणिर्वसिष्ठः। ग्रावाणः। त्रिष्टुप्।

प्र या जिगाति खर्गलेव नक्त- मप द्रुहा तन्वं गूहमाना।
वव्रां अनन्तां अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥ १७ २१८४

× ऋ० २।४१।१९-२१ द्यावापृथिवी हविर्धाने वा।

॥ ३२५ ॥ ( ऋ० १०।७६।१-८ )

सर्प ऐरावतो जरत्कर्णः । ग्रावाणः । जगती ।

आ व ऋञ्जस ऊर्जां व्युष्टि—ष्विन्द्रं मरुतो रोदसी अनक्तन ।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा १ २२८५
तदु श्रेष्ठं सवनं सुनोतना—ऽत्यो न हस्तयतो अद्रिः सोतरि ।
विदद्ध्य१र्यो अभिभूति पौंस्यं महो राये चित् तरुते यदर्वतः २
तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ३
अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ४
दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ५
भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वा—घोषयन्तो अभितो मिथस्तुरः ६ २२९०
सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ७
एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ८ २२९१

॥ ३२६ ॥ ( ऋ० १०।९४।१-१४ )

अर्बुदः काद्रवेयः सर्पः । ग्रावाणः । जगती; ५,७,१४ त्रिष्टुप् ।

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः १
एते वदन्ति शतवत् सहस्रव—दभि क्रन्दन्ति हरितेभिरासभिः ।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत २
एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि ।
वृक्षस्य शाखामरुणस्य बप्सत—स्ते सूभर्वा वृषभाः प्रेमराविषुः ३ २२९५
बृहद् वदन्ति मदिरेण मन्दिने—न्द्रं क्रोशन्तोऽविदन्नना मधु ।
संरभ्या धीराः स्वसृभिरनर्तिषु—राघोषयन्तः पृथिवीमुपब्दिभिः ४ २२९६

सुपर्णा वाचमक्रतोप द्यव्या॒खरे कृष्णा इषिरा अनर्तिषुः ।
न्य१ङ्नि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ५
उग्रा इव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ६
दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ७
ते अद्रयो दशयन्त्रास आशव॒स्तेषामाधानं पर्येति हर्यतम् ।
त ऊं सुतस्य सोम्यस्यान्धसो॒ऽशोः पीयूषं प्रथमस्य भेजिरे ८ १३००
ते सोमादो हरी इन्द्रस्य निंसते॒ऽशुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्वि॒न्द्रो वर्धते प्रथते वृषायते ९
वृषा वो अंशुर्न किला रिषाथने॒ळावन्तः सदमित् स्थनाशिताः ।
रैवत्येव महसा चारवः स्थन यस्य ग्रावाणो अजुषध्वमध्वरम् १०
तृदिला अतृदिलासो अद्रयो ऽश्रमणा अशृथिता अमृत्यवः ।
अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजः ११
ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते ।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः १२
तदिद्वदन्त्यद्रयो विमोचने यामन्नञ्जस्पा इव घेदुपब्दिभिः ।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः १३ १३०५
सुते अध्वरे अधि वाचमक्रता॒ऽऽ क्रीळयो न मातरं तुदन्तः ।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानाः १४ १३०६

॥ ३२७ ॥ ( ऋ० १०।१७५।१-४ )

ऊर्ध्वग्रावा सर्प आर्बुदिः । ग्रावाणः । गायत्री ।

प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुत १
ग्रावाणो अप दुच्छुना॒मप सेधत दुर्मतिम् । उस्राः कर्तन भेषजम् २
ग्रावाण उपरेष्वा महीयन्ते सजोषसः । वृष्णे दधतो वृष्ण्यम् ३
ग्रावाणः सविता नु वो देवः सुवतु धर्मणा । यजमानाय सुन्वते ४ १३१०

॥ ३२८ ॥ ( ऋ० १०।११७।१-९ )

भिक्षुराङ्गिरसः । धनान्नदानम् । त्रिष्टुप्, १-२ जगती ।

न वा उ देवाः क्षुधमिद्वधं ददु-रुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्य-त्युतापृणन् मर्डितारं न विन्दते १
य आध्राय चकमानाय पित्वो ऽन्नवान्त्सन् रफितायोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरो-तो चित् स मर्डितारं न विन्दते २
स इद्भोजो यो गृहवे ददा-त्यन्नकामाय चरते कृशाय ।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ३
न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात् प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ४
पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रा ऽन्यमन्यमुप तिष्ठन्त रायः ५ २३१५
मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ६
कृषन्नित् फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः ।
वदन् ब्रह्मावदतो वनीयान् पृणन्नापिरपृणन्तमभि ष्यात् ७
एकपाद् भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः ८
समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित् सन्तौ न समं पृणीतः ९ २३१९

॥ ३२९ ॥ ( अथर्व० ३।१४।१-६ )

ब्रह्मा । गोष्ठः, अहः, २ अर्यमा, पूषा, बृहस्पतिः, इन्द्रः; १-६ गावः, ५ गोष्ठश्च ।
अनुष्टुप्, ६ आर्षी त्रिष्टुप् ।

सं वो गोष्ठेन सुषदा सं रय्या सं सुभूत्या ।
अहर्जातस्य यन्नाम तेना वः सं सृजामसि १ २३२०
सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः ।
समिन्द्रो यो धनंजयो मयि पुष्यत यद् वसु २
संजग्माना अबिभ्युषीरस्मिन् गोष्ठे करीषिणीः ।
बिभ्रतीः सोम्यं मध्वनमीवा उपेतन ३ २३२१

इहैव गाव एतनेहो शकेव पुष्यत । इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः ४
शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत । इहैवोत प्र जायध्वं मया वः सं सृजामसि ५
मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः ।
रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम ६ २३२५

॥ ३३० ॥ ( अथर्व० ६।४९।३ ) ।×

गार्ग्यः । अग्निः ( अग्निस्तवः ) । विराड् जगती ।

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
नि यन्नियन्त्युपरस्य निष्कृतिं पुरू रेतो दधिरे सूर्यश्रितः ३ २३२६

---

[ २३२७-२३४५ इत्येकोनविंशति ( १९ ) मन्त्राः तत्तद्विषये संग्राह्याः । ]

॥ ३३१ ॥ ( वा० यः १२।१०० )

( दीर्घायुष्यम् । )

दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् १०० २३२७

॥ ३३२ ॥ ( वा० य० ३४।५०-५२ )

( दीर्घायुष्यम् । )

आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् ।
इदꣳ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् ५०
न तद् रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत् ।
यो बिभर्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते
दीर्घमायुः ५१
यदाबध्नन् दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः ।
तन्म आ बध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ५२ २३३०

॥ ३३३ ॥ ( अथर्व० २।१३।१-५ )

अथर्वा । अग्निः, २-३ बृहस्पतिः, ४-५ विश्वे देवाः ( दीर्घायुःप्राप्तिः ) । त्रिष्टुप्, ४ अनुष्टुप्, ६ विराड्जगती ।

आयुर्दा अग्ने जरसं वृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रानभि रक्षतादिमम् १ २३३१

× अथर्व० ६।४९।१-२ = दै० [ अग्निः ] २३३७-२३३८ ।

परि धत्त धत्त नो वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद् वास एतत् सोमाय राज्ञे परिधातवा उ २
परीदं वासो अधिथाः स्वस्तयेऽभूर्गृष्टीनामभिशस्तिपा उ ।
शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ३
एह्यश्मानमा तिष्ठाश्मा भवतु ते तनूः ।
कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ४
यस्य ते वासः प्रथमवास्यं१ हरामस्तं त्वा विश्वेऽवन्तु देवाः ।
तं त्वा भ्रातरः सुवृधा वर्धमानमनु जायन्तां बहवः सुजातम् ५ २३३५

॥ ३३४ ॥ ( ऋ० १०।८५।३१ )

सावित्री सूर्या ऋषिका । दम्पत्योर्यक्ष्मनाशनम् । अनुष्टुप् ।

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ३१ २३३६

॥ ३३५ ॥ ( ऋ० १०।१५५।१,४ )

शिरिम्बिठो भारद्वाजः । अलक्ष्मीघ्नम् । अनुष्टुप् ।

अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि १
यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः ।
हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ४ २३३८

॥ ३३६ ॥ ( ऋ० १०।१४५।४,६ ) *

इन्द्राणी । सपत्नीबाधनम् ( उपनिषत् ) । ४ अनुष्टुप्, ६ पङ्क्तिः ।

नह्यस्या नाम गृभ्णामि नो अस्मिन् रमते जने ।
परामेव परावतं सपत्नीं गमयामसि ४
उप तेऽधां सहमानामभि त्वाधां सहीयसा ।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ६ २३४०

॥ ३३७ ॥ ( ऋ० १०।१६६।१-५ )

ऋषभो वैराजः, ऋषभः शाकरो वा । सपत्नघ्नम् । अनुष्टुप्, ५ महापङ्क्तिः ।

ऋषभं मा समानानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् १ २३४१

* ऋ० १०।१४५।१-६ = दै० [ आयुर्वेद० ] ३६४-३६९ ।

अहमस्मि सपत्नहे न्द्र इवारिष्टो अक्षतः ।
अधः सपत्ना मे पदो रिमे सर्वे अभिष्ठिताः २
अत्रैव वोऽपि नह्या म्युभे आर्त्नी इव ज्यया ।
वाचस्पते नि षेधेमान् यथा मदधरं वदान् ३
अभिभूरहमागमं विश्वकर्मेण धाम्ना ।
आ वश्चित्तमा वो व्रत मा वोऽहं समितिं ददे ४
योगक्षेमं व आदाया ऽहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदका न्मण्डूका उदकादिव ५ १३४५

इत्यायुर्वेद-प्रकरणं समाप्तम् ।

## दैवतसंहितायां

# आयुर्वेद-प्रकरणस्य उपमा-सूची।

अंशुः इव अथ. ५,२९,१२; ७४९ आ प्यायतां अयम् ।
अंशुः शिशुकः यथा अथ. ६,१४,३; ४८५ निर्बलासः प्रपत।
अग्निः इव अथ. १,२५,४; ४१९ तान् अनुदहन् इहि ।
अग्निः इव अथ. ५,१४,१३; १६०३ एतु प्रतिकूलम् ।
अग्निः इव अथः ५,२२,२; ५३२ अभिदुन्वन् । उच्छोचयन् ।
अग्निः वने न अ. १८,१,३९; २००५ व्यसृष्ट शोकम् ।
(यथा) अग्निः वृक्षान् अ. १०,३,१४; १४६६ एवा सपत्नान्।
अग्नी इव अ. ८,२,४; ३० जातं अभि सं धमामि ।
अग्ने इव अ. ७,४५,२, ६८३ अस्य दहतः दावस्य पृथक् ।
अग्ने इव अ. ८,७,१५; ३३८ विजन्त आभृताभ्यः ।
अग्ने इव अ. ६,२०,१; १७९ अस्य दहतः एति शुष्मिणः ।
(यथा यशः) अग्निहोत्रे अ. १०,३,२२; १४७४ एवा मणिः ।
(यथा) अघ्न्या नीचीनं दुह्रे अ.६,९१,२;२०० न्यग् भवतु ते रपः।
…पाः इव ऋ. १०,९४,१३; २३०५ अद्रयः यामन् तद् इद् ।
…वत् अ. ५,२३,१०, ७०५ क्रिमयः हन्मि ।
…ज्यामिव धन्वनि अ. ४,४,७; १३३८ अहं ते पसः
अ. ६,१०,१,२; १३४५ आ तनोमि।
…ः न ऋ. १०,७६,२; २२८६ अद्रिः हस्तयत: सोतरि ।
…ः घर्मिणः सिष्वि॰ ऋ. ७,१०३,८;१००१ मण्डूकाःगुह्याः।
…न् जगतामिव अ. ८,५,११; १४४१ | उत्तमा ओष-
" अ. १९,३९,४; ४२० | धीनाम् ।
…ौ इव व्रजम् | अ. ३,११,५; ७६ | प्रविशत प्राणापानौ।
| अ. ७,५३,५; १४७ |
…ती इव वाहिनी अ. १०,१,१५;१६३० तेनाभि याहि भञ्जती।
…लं इव उदकम् अ. ५,१४,१३; १६०३ वर्ततां कृत्या ।
(यथा) अभिचक्रं देवाः अ. ३,९,१, १७९७ तथाप कृणुता पुनः ।
(…ते विरोहतः) अभि तस्थं अ. ४,४,३; १३३४ शुष्मवत्तरं ।
…इव शृण्वयः ऋ॰ १०,७२,३; १०३८ सिन्धु एति ।
…इव आमयः अ. १,१७,१;'२'१५ हिराः हतवर्चसः;तिष्ठन्तु
(यथा) अमृतं देवेषु अ. १०,३,२५; १४७७ एवा मणिः ।
…न अ. १८,३,२२; ११०५ देवाः जनिमा धमन्तः ।

अर्वतां इव ऋ. १०,९४,६; २२९८ एषां प्रोथथः शृण्वे ।
अर्वतीः इव अ. १०,४,२१; ८१८ नयामि ।
अवध्वसः इव अ. ५,२२,३; ५३३ अरुणः ।
अवसृष्टः न पाशैः वा. य. २०,४५; ३८२ त्मन्या समञ्जन् ।
अश्रेष्माणः अधारयन् अ. ३,९,२; १७२८ तथा तत् मनुना।
अश्वः इव अ. १०,१,१९; १६३४ वि वर्तताम् ।
अश्व इव अ. १९,५७,४; १९१३ कायम् ।
अश्व इव अ. १९,५७,४; १९१३ नीनाहम् ।
अश्व इव नडम् अ. १२,२,५०; २३६ अग्निः अन्तिकात् अनुवपते ।
अश्वं इव अश्वाभिधान्या अ. ५,१४,६; १५९६ तां तस्मै नयामसि ।
अश्वाः इव ऋ. १०,९७,३; ३०३ वीरुधः सजित्वरीः ।
(मृगाः) अश्वाः इव अ. १९,३८,२; २०३ विष्वञ्चः यक्ष्माः ईरते ।
अश्वा न ऋ. १०,७५,७; १०४२ चित्रः सिन्धुः ।
( विषिते हासमाने ) अश्वे इव ऋ. ३,३३,१; १०२२ पर्वतानां ।
(यथा) ऽसितः प्रथयते अ. ६,७२,१; १३४० एवा ते अङ्गेन।
(इषुम्) अस्ता इव अ. १९,१४,३; ११५३ अपेतो जङ्गिडामतिं
(यथा) अहानि अनुपूर्वम् अ. १२,२,२५; २४१ एवा आयूंषि
(यथा) अह्ना रात्री समवती अ. ४,१८,१; ३८८ तथा कृणोमि
अहा इव सूर्यः ऋ. ६,६१,९; १०६७ ऋतावरी अन्याः स्वसृः
(यथा यशः) आदित्ये अ. १०,३,१८ १४७० एवा मणिः कीर्तिं
आपः मलं इव अ. २,७,१; ६६८ सर्वान् शपथान् अधि ।
(पक्वे) आमिषे अधि ऋ. १०,९४,३; २२९५ सूभर्वाः वृषभाः
आर्त्नी इव ज्यया अ. १,१,३; १४१७ इहैव उभौ अभि वि तनु।
आर्त्नी इव ज्यया ऋ. १०,१६६,३, २३४३ अत्रैव वा अपि ।
इटः इव अ. ६,१४,३; ४८५ हायन, उप द्राहि ।
इन्द्र इव विरुजं बलम् अ. १६,२८,३; १५१५ हृदः सपत्नानां ।
इन्द्रः इव ऋ. १,१६६,२; २३४२ अहं अक्षत आस्मि ।
इन्द्रः इव अ. ४,५,७; ६१३ अहं अरिष्टः अक्षितः ।
इन्द्रः इव दस्यून् असुरान् अ. १०,३,११; १४६३ मे शत्रून् ।
इन्द्र इन्द्रियाणि इव अ. १,३५,३; ६१ दक्षमाण हिरण्यं बिभ्रत्।

इन्द्रं न वृत्रतूर्ये धने हिते ऋ. ६,६१,५; १०६३ यः त्वा उप ब्रूते

( धन्वन् ) इरा इव अ. ५,१३,१; ८३४ ते विषं नि जजास।

इषीकां इव अ. ७,५६,४; ८५५ तानि त्वं सं नमः।

( यथा ) इषुका परापतदव सृष्टा अ. १,३,९; ५७९ एवा ते मूत्रं।

इळावन्तः इव ऋ. १०,९४,१०; २३०२ सदमित् आशिताः।

( मध्यमशीः ) उग्रः इव अ. ४,९,४; ५८३ ततः यक्ष्मं वि बाधसे।

उग्राः इव प्रवहन्तः ऋ. १०,९४,६; २२९७ ग्रावाणः समाययुः।

( यथा ) उदकं अपपुषः अ. ६,१३९,४; ६८० एवा नि शुष्य।

उदप्लुतमिव दारु अ. १०,४,३-४; ८१०-११ अरसं विषं उग्रम्।

उद्ना अग्निं इव अ. ७,४५,२; ६८६ ईर्ष्यां शमय।

उर्वरीः इव साधुया अ. १०,४,२१; ८२८ ओषधीनां अहं वृणे।

( यथा ) ऋणं सं नयन्ति अ. १९,५७,१; १९१३ | एवा दुष्वप्न्यं
अ. ६,४६,३; ६३५ | अप्रिये।

ऋणात् ऋणं इव अ. १९,४५,१; ५९२; संनयन् कृत्यां।

( यथा ) ऋतवः ऋतुभिः अ. १२,२,२५; २४१ एवा धातः।

ऋषिणा इव मनीषिणा अ. ८,५,८; १४३८ स्राक्त्येन मणिना।

( वारणी ) एणी इव अ. ५,१४,११; १६०१ कृत्या कर्तारं उत्।

ककुत्सलमिव जामयः अ. १८,४,६६; २२१६ अभि एनं भूम।

कक्ष्या युक्तं इव ऋ. १०,१०,१३; १९६६ त्वां अन्या परि।

कण्ववत् अ. ५,२३,१०; ७०६ क्रिमयः हन्मि।

कन्या इव तुन्ना अ. ६,२२,३; ९६७ एजाति ग्लहा।

( मर्याय इव ) कन्या ऋ. ३,३३,१०; १०३१ शश्वचै ते।

( यथा यशः ) कन्यायाम् अ. १०,३,२०; १४७२ एवा मणिः।

कपिः इव अ. ४,३७,११; ७२५ एकः गन्धर्वः।

( यथा ) कलां संनयन्ति अ. १९,५७,१; १९१३ | एवा सर्वं
अ. ६,४६,३; ६३५ | अप्रिये।

कुमारः सर्वकेशकः इव अ. ४,३७,११; ७२५ एकः गन्धर्वः।

( उदकं ) कुम्भिनीः इव ऋ. १,१९१,१४; ७८७ मयूर्यः ते विषं।

कृशः इव रोहितम् अ. ४,४,७; १३३८ | अनवग्लायता सदा।
अ. ६,१०१,३; १३४५ |

क्रीळयः न मातरम् ऋ. १०,९४,१४; २३०६ सुतं अध्वरे आधि।

क्लीबा इव अ. ८,६,११; १३७८ वने प्रनृत्यन्तः।

खर्गलाः इव ऋ. ७,१०४,१७; २२८४ या नक्तं प्रजिगाति।

( दृषदा ) खल्वान् इव अ. २,३१,१; ६९१ सं पिनष्मि क्रिमीन्।

( दृषदा ) खल्वान् इव अ. ५,२३,८; ७०३ मष्मषा नि आकरम्।

गवां अह न मायुः ऋ. ७,१०३,२; ९९५ मण्डूकानां वग्नुः।

( मुष्काबर्हो ) गवामिव अ. ३,९,२; १७९८ कृणोमि वध्रि।

गां उक्षणमिव रज्ज्वा अ. ३,११,८; ७९ अभि त्वा।

गावः गोष्ठात् इव ऋ. १०,९७,८; ३०८ ओषधीनां शुष्माः।

( रिहाणा मातरा शुभ्रे ) गावा ऋ. ३,३३,१; १०२२ पर्वतानां।

गावो न हव्या ऋ. १,१८७,११; १११८ हे पितो वचोभिः।

गोषु युधः न ऋ. १०,३०,१०; ९१० नियवं चरन्तीः।

गोष्ठामिव अ. २,१४,६; १६५३ आसां धामानि परि असरन्।

( वत्सं ) गौः इव ऋ १०,१४५,६; २३४० ते मनः मां अनु।

( वत्सं ) गौः इव अ. ३,१८,६; ३६३ मामनु ते मनः प्र धावतु।

( स्पन्दना ) गौः स्थालीं अ. ८,६,१७; १३८३ पाष्ण्यों पदा।

( आचितं ) ग्रामं इव अ. ४,७,५; ८०२ वचसा परि स्थाप०।

घर्म इव अभितपन् अ. १९,२८,२; १५१५ द्विषतो नितपन् मणे।

चतुष्पदामिव च्छदिः अ. ३,७,३; १९४ अदो यदवरोचते।

( यथा यशः ) चन्द्रमसि अ. १०,३,१८; १४७० मणिः कीर्तिं भूतिं।

( येषन्तं ) चरुमिव अ. ४,७,४; ८०१ वचसा परि स्थापयामसि।

छायां इव अ. ८,६,८; १३७४ प्र तान् सूर्यः अनीनशत्।

( रात्री ) जगत् इव अ. ६,१२,१; ८४६ हंसात् अन्यत् विषं।

जनं इव शेवधिम् अ. ५,२२,४; ५४४ तक्मानं परि दद्मसि।

जमदग्निवत् अ. ५,२३,१०; ७०५ क्रिमयः हन्मि।

जयतां इव दुन्दुभिः ऋ. १,२८,५; २१८० द्युमत्तमं वद।

( यथा यशः ) जातवेदसि अ. १०,३,१९; १४७१ एवा मणिः कीर्तिं

जाया पतिं इव अ. १८,२,५१; २०७५ वाससा अभ्येनं।

( पत्या नुन्ना ) जाया इव अ. १०,१,३; १६१८ शूद्रकृता कर्त्रा

जाया इव पत्ये ऋ. १०,१०,७; १९६० अहं तन्वं वि रिरिच्याम्।

जालेन अभिहिता इव अ. १०,१,३०; १६४५ तमसा आवृताः।

( यथा ) जीवाः अदितेः उपस्थे अ. २,२८,४; ४ त्वां पिता गुपिता।

( यथा ) जीवगृभः अ. १०,९७,११; ३११ तथा यक्ष्मस्य आत्मा।

ज्यामिव धन्वनः अ. ५,१३,६; ८३९ मन्योः विमुञ्चामि।

( यथा ) समं ज्योतिः सूर्येण अ. ४,१८,१; ३८८ तथा कृणोमि।

ज्योतिषा इव अ. ४,१९,३; ३९८ अभि दीपयन् अप्रमेषि।

तक्मन्वी इव अ. ५,२२,७; ५३७ तां धूनुहि।

तम इव अ. ८,२,१२; ३८ सर्वं दुर्भूतं अपहन्मसि।

तमस इव ज्योति अ. ५,१३,३; ८३६ उदेतु सूर्यः।

( प्रदोषं ) तस्काराः इव ऋ. १,१९१,५; ७७८ अदृष्टाः विश्वदृष्टाः।

( यथैव ) तृप्यते मयः अ. १९,२,५; ९३२ तास्त आदत्त भेषजीः।

(यथा) तेज आहितम् अ. १०,३,१७ १४६९ एवा मणिः कीर्ति
(यथा अन्तस्तिष्ठति) तेजनम् अ. १,२,४; ६६७ एवा रोगं च ।
(उपद्) त्वचमिव भूम्याः अ. १९,२८,४; १५१६ शिर एषां ।
दिवि देवाः इव अ. ६,८०,२; १५८९ त्रयः कालकाञ्जाः श्रिताः ।
दिवो वृक्षमिवाशनि अ. ६,३७,२; १७७४ शप्तारं अत्र नो जहि ।
दुहिता इव पितरम् अ. १०,१,२६; १६४१ जानीहि कृत्ये ।
दृतिं न शुष्कम् ऋ. ७,१०३,२; ९९५ आपः शयानं एनम् ।
दृतिं (इव) सुरावतो ऋ. १,१९१,१०; ७८३ सूर्यं विषम् ।
(निहृमाणं) दृतेरिव अ. ६,१८,३; ६८४ ते ईर्ष्यां मुञ्चामि ।
देवः इव अ. ४,३७,११; ७२५ प्रियः भूत्वा ।
देवः न सविता ऋ. १,३६,१३; २२५७ (यूप), ऊर्ध्वः तिष्ठ ।
देवा इव असुरमायया अ. ३,९,४; १८०० येन श्रवस्यवः चरथ ।
द्यां इव उपरि अ. १८,३,२९; २१२२ ऊर्ध्वं भानुं सविता ।
द्यां इव उपरि | अ. १८,३,२५-२८, ३०-३५; २१०८-११,२११३-१८ वाहुच्युता पृथिवी
(दिवि) द्यां इव सूर्यः अ. ६,१२,१; ८४६ अहीनां जनिमागमम् ।
(इमे) द्यावापृथिवी वि इतः अ. ३,३१,४; १७१ अहं सर्वेण ।
द्यौः इव अ. ६,१४२,१; ११२५ तत् उच्छ्रयस्व ।
द्रुपदादिव मुमुचानः वा. य. २०,२०; ११०५ आपः मा एनसः ।
द्रुपदादिव मुमुचानः अ. ६,११५,३; १७२९ आपः शुन्धन्तु ।
धन्वानः घना इव अ. १९,३५,२; १५६२ स नो रक्षतु जङ्गिडः ।
धनुः इव अ. ६,१०१,२; १३४३ आ तानय पसः ।
धनुः इव अ. ४,४,६; १३३७ आ तानय पसः ।
(यथा) नकुलः विच्छिद्य अ. ६,१३९,५; ६८१ एवा कामस्य
नड इव अ. ४,१९,१; ३९६ प्रजां छिन्धि वार्षिकम् ।
(यथा) नडं कशिपुने स्त्रियो अ. ६,१३८,५; ५०२ एवा भिनद्मि ।
नदः इव अ. ६,१३७,२-३; ४६४-६५ केशाः वर्धन्ताम् ।
नदी फेनमिवा वहत अ. १,८,१; ७२७ इदं हविः यातुधानान् ।
नावा इव अ. ४,३३,७; १७६२ द्विषो नो अति पारय ।
निष्कमिव अ. ५,१४,३; १५९३ कृत्यां देवाः प्रति मुञ्चत ।
(यथा) पतन्ति पक्षिणः अ. १,११,६; १४१० एवा त्वं जरायुणा ।
पत्नी इव जाया अ. ६,२२,३; ९६७ एहं तुन्दाना ।
पथा इव सूरिः अ. १८,३,३९; २१२२ वि श्लोक एति ।
(सूरेः) पथ्या इव ऋ. १०,१३,१; २२७५ श्लोकः एतु ।
पर्जन्यः दिशं दिशं वि अ. ३,३१,४; १७१ अहं सर्वेण ।
पयसा इव धेनवः ऋ. १०,७५,४; १०३९ त्वां वाश्राः अर्षन्ति ।

*

(यथा यशः) परमेष्ठिनि अ. १०,३,२४; १४७६ एवा मणिः कीर्ति
(इन्द्राः) पर्णं इव ऋ. १०,१८,१४; १९५३ मां प्रतीचीन ।
(सरौ) पर्णं इव अ. ४,२५,१, १३४६ शेपो गर्भस्य रेतोधाः ।
(पूतं) पवित्रेण इव आज्यं | वा. य. २०,२०; ११०५ आपः शुन्धन्तु ।<br>अ. ६,११५,३; १७१९
पिता इव पुत्रान् अ. २,१३,१; २३३१ अभिरक्षतात् इमम् ।
पितरं न पुत्रः ऋ. ७,१०३,३; ९९६ अन्यः अन्यं (मण्डूकं) ।
पियारुः निष्कमिव अ. १९,५७,५, १९१७ देवपीयुः प्रति ।
पुत्र इव पितरम् अ. ५,१४,१०; १६०० कृत्ये गच्छ ।
(यथा) पुत्रं जनादिति अ. ६,८१,३; १३६१ त्वष्टा तं अस्यै ।
(यथा न) पूर्वं अपरः जहाति अ. १२,२,२५; २४१ एवा धातः ।
पूषा इव ऋ. ६,६१,६; १०६४ नः सनिं रद ।
(यथेयं) पृथिवी गर्भं आ दधे अ. ५,२५,२, १३४७ एवा दधामि ।
(यथेयं पृथिवी गर्भं आ दधे अ. ६,१७,१-४; १३६२-६५ एवा ते ।
(यथा यशः) पृथिव्याम् अ. १०,३,१९; १४७१ एवा मणिः ।
पौञ्जिष्ठ इव कर्वरम् अ. १०,४,१९; ८१६ शीर्षाणि अग्रभम् ।
(यथा यशः) प्रजापतौ अ. १०,३,२४, १४७६ एवा मणिः कीर्ति ।
बन्धमिव अ, ५,१४,१०; १६०० अवक्रामी ।
(यथा) बाणः सुसंशितः अ. ६,१०५,२; ४८७ एवा त्वं कासे ।
बिसखा इव ऋ. ६,६१,२; १०६० ऊर्मिभिः गिरीणां सानु ।
(वपन्तः धान्यकृतः) बीजम् ऋ. १०,९४,१३, २३०५ ग्रावाणः ।
(यथा) बीजं उर्वराया अ. १०,६,३३; १५१० एवा मयि प्रजा ।
ब्राह्मणा इव व्रतचारिणः ऋ. ७,१०३,१; ९९४ मण्डूकाः वाचं ।
ब्राह्मणासः अतिरात्रे न सोमे ऋ. ७,१०३,७; १००० मण्डूकाः ।
भग इव यामेषु अ. ६,२१,२; ४५८ भेषजानां श्रेष्ठं असि ।
(इदं) भुवनं विश्वं वि अ. ३,३१,९; १७९ अहं सर्वेण पाप्मना ।
(यथा) भूमिः मृतमनाः अ. ६,१८,२; ६८३ एवा ईर्ष्योः ।

मण्डूकाः उदकात् इव ऋ. १०,१६६,५; २३४१ मे पदात् अधः
मत्तः इव अ. ६,२०,१; १७९ विलपन् ।
मधुपर्के यथा यशः अ. १०,३,२१; १४७३ एवा मणिः ।
(उग्रः) मध्यमशीः इव ऋ. १०,९७,१२; ३१२ ओषधीः यक्ष्मं ।
(यथा) मनः (पतति) अ. १,११,६; १४१० एवा त्वं जरायुणा ।
यथा मनः मनस्केतैः परा अ. ६,१०५,१; ४८६ एवा कासे प्रपत ।
(यथा पुरा) मनवे गातुम् ऋ. १०,७६,३; २२८७ तद्वत् व्याप्नोतु ।
मनसः न प्रयुक्ति ऋ. १०,३०,१; ९०१ सोमः देवत्रा अपः ।
(यथा) मम्रुषो मनः अ. ६,१८,२; ६८३ एवा ईर्ष्यो मृतं मनः ।

मर्यः न कल्याणीभिः ऋ. १०,३०,५; ९०५ याभिः सोमः ।
मर्य इव योषाः अ. १८,४,१०; २२१० सोमः शतयामना ।
माता इव अ. २,२८,५; ५ अस्मै शर्म यच्छ ।
माता इव पुत्रम् अ. २,२८,१; १ मित्रः एवं पात्वंहसः ।
( सं ) मातरः इव अ. ८,७,२७; ३५० पुष्पवतीः दुहामस्या ।
( उशतीः इव ) मातरः ऋ. १०,९,२;८८० तस्य भाजयत इह नः
( स ) मातरा चित् न ऋ. १०,११७,९; २३१९ ज्ञाती चित् ।
माता पुत्रं यथा अ. १८,२,५०;२०७४ अभ्येनं भूम ऊर्णुहि ।
( यथा ) माता पुत्रं सिचा ऋ. १०,१८,११; १९५० एनं हे भूमे
माता इव पुत्रम् वा. य. १२,३५; ११०० सुपत्नीः बिभ्रत ।
माता इव पुत्रेभ्यः अ. ६,३०,३; ४७२ शमि, केशेभ्यः मृड ।
मुष्करं यथा अ. ६,१४,२; ४८४ बलासं निः क्षिणोमि ।
मूलमुर्धावा इव अ. ६,१४,२; ४८४ छिनद्मि अस्य बन्धनम् ।
मृगं इव अ. ५,१४,१२; १६०२ तं कृत्याकृतं पुनः गृह्णातु ।
मृगी इव अ. ५,१४,११; १६०१ कृत्या कर्तारं उद् ऋच्छतु ।

यथा यमस्य गृहे त्वा अ. ६,२९,३; १५८७ तथा आभूक्रम् ।
यथा यमस्य सादन अ. १८,३,७०; २१६७ पुनर्देहि वनस्पते ।
यथा यमाय हर्म्यं अ. १८,४,५५; २२०५ एवा वपामि ।
यमे इव ऋ. १०,१३,२; २२७६ | युवां यतम ने यदा एतम् ।
अ. १८,३,३८; २१२१ |
यथा यशः यजमाने अ. १०,३,२३; १४७५ एवा मणिः कीर्तिं ।
यथा यशः यज्ञे अ. १०,३,२३; १४७५ एवा मणिः कीर्तिं ।
युवयोः चित् न समा ऋ. १०,११७,९;२३१९ तथा ज्ञाती चित् ।
यूथा इव सुमति पश्वः अ. १८,३,२३, २१०६ उग्रः देवानां ।
पीप्याना योषा इव ऋ. ३,३३,१०; १०३१ वयं ते नि नंसै ।

( सुखः ) रथः इव अ. ५,१४,५; १५९५ | कृत्या कृत्याकृतं ।
अ. ५,१४,१३; १६०३ |
रथः इव ऋ. ६,६१,१३; १०६१ बृहती विभ्वने कृता ।
( यथा सुचक्र सुपविः ) रथः अ. ४,१२,६; ४२६ तथा प्रति ।
( आशवः ) रथाः इव अ. ३,९,५; १८०१ शपथेभिः उत् ।
रथान् इव अ. ५,१३,६; ८३९ सात्रासहस्य मन्योः वि मुञ्चामि ।
( ऋभुः ) रथस्य अंगानि इव अ. ४,१२,७; ४२७ परुषा परुः ।
रथस्य इव अ. १०,१,८; १६९३ यस्ते परूंषि संदधौ ।
( यथा यशः ) रथे अ. १०,३,२०; १४७२ एवा मणिः ।
रथी इव ऋ. ५,८३,३; ९७६ कशया अश्वान् अभिशिपन् ।
रथ्या इव ऋ. ३,३३,२; १०२३ युवां समुद्रं अच्छा याथः ।

(प्रबाबधाना) रथ्या इव ऋ. ७,९५,१; १०७३ अपः प्रबाबधाना ।
रथ्या इव चक्रा ऋ. १०,११७,५; २३१५ रायः आ वर्तन्ते ।
रथ्या इव चक्रा ऋ. १०,१०,७ १९६० [आवां] वि वृहेव चित् ।
रथ्या इव चक्रा ऋ. १०,१०,८ १९६१ तेन अन्येन वि वृह ।
राजा इव युध्वा ऋ. १०,७५,४; १०३९ त्वमित सिचौ नयसि ।
राजानः समितौ इव ऋ. १०,९७,६; ३०६ ओषधीः समग्मत ।
रिश्यस्य इव परीशासम् अ. ५,१४,३; १५९३ त्वचः परि ।
रैवत्या इव ऋ. १०,९४,१०; २३०२ महसा चारतः स्यन ।

लिबुजा वृक्षं इव ऋ. १०,१०,१३; १९६६ त्वां अन्या ।
लिबुजा वृक्षं इव ऋ. १०,१०,१४; १९६७ अन्यः त्वां ।

वत्सो धारुरिव मातरम् अ. ४,१८,२; ३८९ तं प्रत्यगुप पद्यताम् ।
वत्समिव मातरा संरिहाणे ऋ. ३,३३,३; १०२४ युवां अया०
वधूं इव वहतौ अ. १०,१,१; १६१६ चिकित्सवः यां ।
वपुषी इव ऋ. १०,७५,६; १०४२ दर्शता ।
(देवेषु) वरुणो यथा अ. ६,२१,२; ४५८ भेषजानां श्रेष्ठं असि ।
वर्चं वेशन्त्या इव अ. १,३,७; ५७७ प्र ते भिनद्मि मेहनम् ।
वषट्कारे यथा यशः अः १०,३,२२; १४७४ एवा मणिः ।
वह्यंश्रान्ता वधूः इव अ. ४,२०,३; ७५६ स भूमिं आ ।
वाका अपचितां इव अ.६,२५,१-३;१६८२-८४ ताः सर्वाःनश्यन्तु
( यथा ) वातः अ. १,११,६; १४१० एवा त्वं पत ।
वातः अभ्रं इव अ. ८,६,१३; १३८५ पिङ्गः स्त्रीभागान् ।
( यथा ) वातश्च्यावयति अ. १०,१,१३; १६१८ एवा सर्वं ।
( यथा ) वातश्च्यावयति अन्तरिक्षादभ्रम ,, ,,
यथा वातः न्यग् वाति अ. ६,९१,२; २०० न्यग् भवतु ते रपः ।
वात इव वृक्षान् अ. १०,१,१७; १६३२ नि मृणीहि ।
( यथा ) वातः वनस्पतीन् अ. १०,३,१३; १४६५ एवा मे ।
( यथा ) वातश्च अग्निश्च अ. १०,३,१४; १४६६ एवा मे ।
( दिवि ) वाता इव श्रिताः ऋ. १,१८७,४; १०११ त्वे रसाः ।
( यथा ) वातेन प्रक्षीणाः अ. १०,३,१५; १४६७ एवा सपत्नान् ।
( पथा ) वार् इव ऋ. १०,१४५,६; २३४० मनः मामनु ।
विद्धस्य इव अ. १०,१,२६; १६४१ कृत्ये पदं नय ।
( नानदती ) विनद्धा गर्दभी इव अ. १०,१,१४; १६१९ कृत्ये
वृक इव अविमतः अ. ६,३७,१; १७७२ सहस्राक्षः उप प्रागाद् ।
वृक्षः इव अ. ४,७,५; ८०२ तिष्ठ स्थाम्नि ।
वृक्ष इव विद्युता हतः अ. ७,५९,१; १७७६ आ मूलाद् अनु ।
वृक्षादिव स्रजम् अ. ८,६,२६; १३९१ कृत्वा प्रिये प्रति ।

(यथा) वृत्रः अपः तस्तम्भ अ. ६,८५,३; १८४ एवा ते यक्ष्मं ।
(यथा) वृणन्ती इव कन्यला अ. ५,५,३; ४३० वृक्षं वृक्षं आरोहसि ।
वृषभः न ऋ. १०,७५,३; १०३८ सिन्धुः रोरुवत् एति ।
व्याघ्रः श्वपदामिव अ. १९,३९,४; ४५० उत्तमोऽसि ओषधीनाम् ।
व्याघ्रः श्वपदामिव अ. ८,५,११; १६४१
शुष्का इव अ. ३,१४,४; १३२३ इहो पुष्यत ।
शुनः इव अ. २,२५,२; ४१७ दुर्णाम्नां शिरो वृश्चामि ।
शम्यावत् ऋ. १०,९४,२; २२९४ एते वदन्ति ।
(यथा) शफं संनयन्ति अ. ६,४६,३; ६३५ दुष्वप्न्यं द्विषते ।
(यथा) शफं संनयन्ति अ. १९,५७,१; १९१३ दुष्वप्न्ये अप्रिये ।
शचीभिः न रमन्या समञ्जन् वा. य. २०,४१; ३७२ देवः यशं ।
शरं इव अ. ४,७,४; ८०१ ते मदं मदावति वि पातयामसि ।
शर्मन् त्रूक्षम् ऋ. ७,९५,५; १०८६ शर्मन् दधानाः उप स्थेयाम ।
शाक्तस्य इव शिक्षमाणः ऋ. ७,१०३,५; ९९८ मण्डूकानां ।
शालां मधुमतीं इव अ. १,३४,४, ४८१ मां इत किलत्वं ।
शारिशाका इव अ ३,१४,५; १३२४ शिवो वो गोष्ठो भवतु ।
शिशुं न मातरः ऋ. १०,७५,४; १०३९ त्वां वाश्राः अर्षन्ति ।
शुने पेष्ट्रं इव अवक्षामम् अ. ६,३७,३; १७७५ तं प्रत्यस्यामि ।
शुष्कं शरीः इव दूषणः अ. ३,९,४; १८०० बन्धुरा काबवस्य च ।
शृङ्गिणां शृंगाणि इव ऋ. ३,८,१०; २१६८ स्वरवः पृथिव्यां ।
श्येनः इव अ. ५,३०,९; १०६ यक्ष्मः प्रापप्तत् ।
श्वा इव अ. ४,३७,११; ७२५ एकः गन्धर्वः ।
सखा सख्युः न अ. १८,४,६०; २२१० प्र वा एति इन्दुः ।
(यथा) सत्यं आहितम् अ. १०,३,२५; १४७७ एवा मणिः ।
समुद्रः इव अ. ६,१४२,२; ११२५ अधि आक्षितः ।
समुद्रं न सुभुवः अ. ४,८,७; ८०४ अप्स्वन्तः तस्थिवांसं ।
समुद्रस्य उदधेः इव अ. १,३,८; ५७८ ते वास्तिबिलं विषितम् ।
सीता इव अ. १९,४५,४; ५९५ ध्रुवस्तिष्ठासि चार्यः ।

सहस्रवत् ऋ. १०,९४,२; २२९४ एते ग्रावाणः वदन्ति ।
सिंहस्य इव अ. ८,७,१५; ३३८ स्तनथोः सं विजन्ते ।
सिन्धुं इव नावा अ. ४,३३,८; १७६३ अति पर्षा स्वस्तये
सुपर्णो वसतेः इव अ. ६,८३,१; ५१३ अपचितः प्र पतत ।
सूरो न द्युता अ. १८,४,५९; २२०९ त्वं कृपा रोचसे ।
सूर्यः इव अ. १९,३३,५; १८३७ आभाहि प्रदिशः चतस्रः ।
सूर्यं इव दिवमारुह्य अ. ८,५,७; १४३७ वशी कृत्या वि बाधते ।
(यथा) सूर्यः अतिभाति अ. १०,३,१७; १४६९ मणिः कीर्तिं ।
(यथा न्यक् तपति) सूर्यः अ. ६,९१,२; २०० न्यग् भवतु ते ।
(यथा) सूर्यो मुच्यते तमसः अ. १०,१,३२; १६४७ एव अहं ।
(वीध्रे) सूर्यमिव सर्पन्तम् अ. ४,२०,७; ७६० मा पिशाचं ।
(यथा) सूर्यस्य रश्मयः अ. ६,१०५,३; ४८८ एवा त्वं कासे ।
सेना इव अ. ४,१९,२; ३९७ एषि त्विषीमती ।
सोम इव यामेषु अ. ६,२१,२; ४५८ वीरुधानां वसिष्ठम् ।
(यथा यशः) सोमपीथे अ. १०,३,२१; १४७३ मणिः कीर्तिं ।
स्तुकां इव अ. ७,७४,२; ५०४ जघन्यां आसां आ छिनद्मि ।
स्तेनः इव व्रजम् ऋ. १०,९७,१०; ३१० ओषधीः विश्वाः ।
स्नुषा इव श्वशुरादधि अ. ८,६,२४; १३९० सूर्यात् परि सर्पन्ति ।
स्रजः इव अ. ५,१४,१०; १६०० अभिष्ठितः दश ।
स्विन्नः स्नात्वा मलादिव अ. ६,११५,३; १७२९ आपः शुन्धन्तु
वा. य. २०,२०; १८०५ मैनसः ।
हंसाः इव ऋ. ३,८,९; २१६७ स्वरवः नः आगुः ।
हरी इव अन्यांसि ऋ. १,२८,७; २२८२ आयजी उलूखल०
(यथेदं) हर्म्यम् अ. ४,५,५; ६१७ तेषां अक्षीणि सं दध्मः ।
(यथा) हव्यं वहसि अ. ४,२३,२; १६८६ एवा देवेभ्यः ।
(यथा) यज्ञं कल्पयसि अ. ४,२३,२; १६८६ एवा देवेभ्यः ।
(समौचित्) हस्तौ न समं ऋ. १०,११७,९; २३१९ तथा ज्ञाती ।
हस्ती इव रजः अ. १०,१,३२; १६४७ दुरितं जहामि ।
हृदं अग्निः इवा दहन् अ. ६,३७,२; १७७४ परि णः वृङ्धि शपथ ।

# विषय--सूची ।

× ‘ कुष्ठः ’ वीरुधां बलवत्तमा ओषधिः । सा तक्मानं नाशयति । अत्र अतः ‘ कुष्ठः तक्मनाशनः । ’ इति प्रथमस्थले, ‘ तक्मनाशनम् ’ इति द्वितीयस्थले पाठः योग्यः ।

※ अत्र क्लीबत्वापादनम् ’ इति पाठः समीचीनतरः भवति ।

## पापादिनाशनम् । ( १६५३-१९१७ )

## मणिधारणम् । ( १४२४-१५७८ )

मंत्रोक्ताः १९,४५,१-१०; ५९२-६०१। (आञ्जनम्) रोगचि.
मंत्रोक्ताः ५,२९,१-१५; ७३८-५२। (रक्षोघ्नम्) क्रिमिना.
मंत्रोक्ताः ११,३,३२-५६; ११५८-८२। ९,५,१-३८;
११८३-१२२० (ओदनः) अन्नादि.
मंत्रोक्ताः ८,६,१-२६; १३६७-९२। (मातृनामा) गर्भाधानं
मंत्रोक्ताः ८,५,१-२२; १४३१-५२ (कृत्यादूषणम्) मणिधा.
मंत्रोक्ताः ११,६,१-२३; १७३४-५६ पापादि.
मंत्रोक्ताः १८,१,६,१३-१४; १७,३९-४९; ५१-५४;
५७-६१। २,१-६०; २००१-८४। (पितृमेधः)
३,४४,४६; २१२७,२१२९। १८,४,१-८९;
२१५१-२२३९ यज्ञादि.

मन्याविनाशनम् ६,२५,१-३; १६८२-८४ पापादि.
मन्युशमनम् ६,४३,१-३; ६३९-४१ रोगचि.
मरुतः २,२९,४-५; ९४-९५। ७,३३,१; १४१ दीर्घायु.
मरुतः ४,१३,४; ५५१ रोगचि.
मरुतः ६,२२,१-३; ९६६-६७। ४,१५,४-१०;
१००७-१३ जलचि.
मरुतः ४,२७,१-७; [ मरुतः ४४०-४६ ] पापादि.
मही २,३१,१-५; ६९१-९५ क्रिमिना.
मातृनामा ४,२०,१-९; ७१४-६२ क्रिमिना.
मातृनामा ८,६,१-२६; १३६७-९२ गर्भाधानं
मित्रः १,३,२; ५७२। ७,३०,१; ५९०; १,१८,२;
६७४ रोगचि.
मित्रावरुणौ २,२८,२; २ दीर्घायु.
मित्रावरुणौ ६,३२,३; ७३३ क्रिमिना.
मूत्रमोचनम् १,३,१,९; ५७१-७९ रोगचि.
मृत्युः १२,२,२१-३३; २३७-४९ यक्ष्मना.
मेधा १९,४०,१-४; १४११-१४। ६,१०८,१-५;
१४१९-२३ गर्भाधानं
मेधाजननम् १,१,१-४; १४१५-१८ गर्भाधानं
मेधावर्धनम् ६,१०८,१-५; १४१९-२३ गर्भाधानं

यक्ष्म २,१०,४-८; १६६५-६९ पापादि

## यक्ष्मनाशनम्। ( १६२,३००,२३३६ )

यक्ष्मनाशनम् ३,११,१-८; ७२-७९। २,९,१-५;
८०-८४ दीर्घायु.
यक्ष्मनाशनम् ऋ. १०,१६३,१-६; अ. ३,३१,१-११।
६,२०,१-३। ८५,१-३। १२७,१-३। १,१२,१-४;
१६२-९१। ३,७,६-७। ६,९१,१-३; १९७-२०१।
२०,९६,६-१०; २०५-९। १९,३८,१-३;
२०२-४। २०,९६,१७-२३; २१०-१६ यक्ष्मना.
यक्ष्मनाशनम् दम्पत्योः ऋ. १०,८५,३१; २३३६ यक्ष्मना.
यक्ष्मनाशनम् ५,४,१-१०; ४३७-४६ ओषधि.
यक्ष्मनाशनम् ( वनस्पतिः ) २,८,१-५; ४९३-९७ रोगचि.
यक्ष्मनाशनः अग्निः १,२५,१-४; ५२५-२८ रोगचि.
यक्ष्मविबर्हणम् २,३३,१-७; २९४-३०० यक्ष्मना.
यक्ष्मनिवारणम् ९,८,१-२२; २७२-९३ यक्ष्मना.
यक्ष्मरोगनाशनम् १२,२,१-५५; २१७-७१ यक्ष्मना.
यजमानः ऋ. ८,३१,१-४; २२४०-४३। ऋ. १०,
१८३,१; २२४४ यज्ञादि.
यजमानपत्नी ऋ. १०,१८३,२; २२४५ यज्ञादि.

## यज्ञादिकम्। ( १९१८-२३२४ )

यज्ञः ऋ. ८,३१,१-४; २२४०-४३। अ. ७,१७,१-८।
[इन्द्रः ३१२०-२७]। १९,१,१-३। ५८,१-६। ५९,२;
२२४६-५५। ५९,१,३ [ अग्निः १२१४,१४९४ ] यज्ञादि.
यमः ६,२७,१-३ २८,१-३। २९,१-३; १५७९-८७ अरिष्ट.
ऋ. १०,१४,१-५,१३-१६; १९६८-७२,
१९७६-७९ यज्ञादि.
यमः यमी ऋ. १०,१०,१-१४; १९५४-६७ यज्ञादि.
यमः ऋ १०,१३५,१-७; १९८०-८६। १८,१,६;
१३-१४; १७,३९-४९; ५१-५४; ५७-६१।
२,१-६०। ३,१,३-४९,५२,५४,५६,५८-६६,
६८-७३। ४,१-८९; २००१-२२३९ यज्ञादि.
यातुधानीः १,२८,३-४; ७३६-३७ क्रिमिना.
यातुधानक्षयणम् ६,३२,१-३; ७३१-३३ क्रिमिना.
यातुधाननाशनम् १,१८,१-४; ७२७-३०। १,७,
१-७; ७६७-७३ क्रिमिना.
यूपः १,३६,१३-१४; २२५७-५८। ऋ. ३,८,१-५;
२२५९-६३ यज्ञादि.
यूपः वा. य. ६,२-३,६। २१,४६। २८,१०; २२६९-७३ यज्ञादि.
यूपाः ऋ. ३,८,६-१०; २२६४-६८ यज्ञादि.
योनिगर्भः ५,२५,१-१३; १३४६-५८ गर्भाधानं

वाजीकरणम्। ( १३३१-१३४५ )

# अभावकरणार्थ निर्दिष्टाः विषयाः ।

पाप— नाशनम् ।
पापलक्षण— नाशनम् ।
पाप्म— नाशनम् ।
बलास— नाशनम् ।
यक्ष्म— नाशनम् ।
यक्ष्मरोग— नाशनम् ।
रोग— नाशनम् ।
विष— नाशनम् ।
श्वेतकुष्ठ— नाशनम् ।
सर्पविष— नाशनम् ।
ईर्ष्याविनाशनम् ।
मन्या— नाशनम् ।

**अप + नि ।**

ईर्ष्या— अपनयनम् ।

**वि + बर्ह् ।**

यक्ष्मविबर्हणम् ।

**बाध् ।**

सपत्नीबाधनम् ।

**उत्+वि + मुच् ।**

उन्मत्तता— मोचनम् ।
दुःख— मोचनम् ।
निर्ऋति— मोचनम् ।
पाप— मोचनम् ।
पाश— मोचनम् ।
बन्ध— मोचनम् ।
मूत्र— मोचनम् ।
शाप— मोचनम् ।
उत्— मोचनम् ।
पाश— विमोचनम् ।

**नि + वृ ।**

गर्भदोष— निवारणम् ।
यक्ष्म— निवारणम् ।
रोग— निवारणम् ।
सर्पविष— निवारणम् ।

**उप + शम् ।**

कास— शमनम् ।
पाप–शमनम् ।
मन्यु— शमनम् ।
वृषरोग— शमनम् ।
शाप— शमनम् ।
रोग— उपशमनम् ।

**हन् ।**

अलक्ष्मी— घ्नम् ।
क्रिमि— घ्नम् ।
रक्षो— घ्नम् ।
रोग— घ्नम् ।
विष— घ्नम् ।
पाप्म— हा ।

**परि + हृ ।**

कृत्यापरिहरणम् ।

## भावकरणार्थ निर्दिष्टाः विषयाः ।

दीर्घायुः प्राप्तिः ।
मेधा– जननम् ।
सपत्नी– जयः ।
केश– दृंहणम् ।
गर्भ– दृंहणम् ।
धमनी– बन्धनम् ।
सर्पेभ्यः– रक्षणम् ।
आयुर् – वर्धनम् ।
केश– वर्धनम् ।
मेधा– वर्धनम् ।
सौभाग्य– वर्धनम् ।

**द्रष्टुः कामः ।**

आयुष्कामः ।
परस्परैकचित्तीकरणकामः ।
पुष्टि– कामः ।
वृष्टि– कामः ।
सपत्नक्षय– कामः ।
स्वस्त्ययन– कामः ।

# यक्ष्मनाशनम् ।

## ( १ ) गुणबोधक-पदसहिता मन्त्रोक्त-देवताः ।

अग्निः अ. ३,३१,१,६; १६८,१७३ । २०,९६,९; २०८ । ११,१,३-५, १७-१८,५०,५२; २१९-२१, २३३-३४, २६६,२६८ । ११,२,१-५५; २१७-७१

अग्निः क्रव्यात् १२,२,७-१०,१५-१६,३५-३८; २२३-२६, २३१-२३२,२५१-५४

अग्निः गार्हपत्यः १२,२,३४,४४-४६; २५०,२६०-६२

अग्निः वैश्वानरः ६,८५,३; १८४

अग्निः संकुसुकः १२,२,११-१४,१९४०; २२७-३०, २३५, २५६

अघ्न्या ६,९१,२; २००

अनड्वान् १२,२,४८; २६४

अरुन्धती १२,२,२६-२७; २४२-४३

आदित्याः १२,२,६; २२२ । ९,८,२१-२२; २९२-९३

आदित्याः ९,८,२२; २९३

आपः ३,३१,३; १७० । ३,७,५; १९६ । ६,९१,३; २०१ । १२,२,४०-४१; २५६-५७

आयुः ३,३१,८-१०; १७५-७७

आयुष्यम् २,३३,१-७; २९४-३००

इन्द्रः ६,८५,२; १८३ । २०,९६,९; २०८ । १२,२,४७, ४८; २६३,२७०

इन्द्राग्नी २०,९६,६; २०५

ऋतवः १२,२,२९-३०; २४५-४६

ओषधयः ६,२०,२; १८०

गुल्गुलुः अ. १९,३८,१-३, २०२-४

ग्राम्याः पशवः ३,३१,३; १७०

चन्द्रः ३,३१,६; १७३

चन्द्रमाः २,३३,१-७; २९४-३००

तक्मा ६,२०,१-३; १७९-८१

तारके ३,७,४; १९५ । विचृतौ सुभगे ।

त्वष्टा ३,३१,५; १७३ । १२,२,२४; २४०

देवाः ३,३१,१,७; १६८,१७४ । ६,८५,१-२; १८२-८३ । ऋ. १०,८५,३१; २३३६ यज्ञियाः ।

द्यौः ६,२०,२; १८०

द्यावापृथिवी ३,३१,४; १७१

धाता १२,२,२५; २४१

पन्थानः ३,३१,४; १७१

पर्जन्यः पर्जन्यस्य वृष्टिः ३,३१,११; १७८

पवमानः ३,३१,२; १६९

पशवः ग्राम्याः ३,३१,३; १७०

पाप्महा ३,३१,१-११, १६८-७८

पृथिवी ६,२०,२; १८०

बृहस्पतिः २०,९६,९; २०८

ब्रह्मा १२,२,६; २२२ । वसुनीतिः ।

ब्रह्मणस्पतिः १२,२,६; २२२

मन्त्रोक्ताः १२,२,१-५५; २१७-७१

मित्रः अ. ६,८५,२; १८३

मृत्युः १२,२,२१-३३; २३७-४९

यक्ष्मनाशनम् ऋ १०,१६३,१-६; १६२-६७ । अ. ३,३१, १-११; १६८-७८ । ६,२०,१-३; १७९-८१ । ८५,१-३, १८२-१८४ । १२७,१-३; १८५-८७ । १,१२,१-४; १८८-१९१ । ३,७,६-७; १९७-९८ । ६, ९१, १-३; १९९-२०१ । १९,३८,१-३; २०२-४ । २०,९६,६-१०; २०५-९ । ९६,१७-२३; २१०-१६ । ऋ. १०,८५,३१; २३३६

यक्ष्मनिवारणम् अ. ९,८,१-२२; २७२-९३

यक्ष्मरोग-नाशनम् अ. १२,२,१-५५; २१८-७१

यक्ष्म-विबर्हणम् अ.२,३३,१-७; २९४-३००

रुद्रः ६,२०,२; १८०

रुद्राः १२,२,६; २२२

वनस्पतिः ६,८५,१; १८२ । १२७,१-३; १८५-८७

## ( २ ) यक्ष्मस्य शरीरगतस्थानानि ।

[illegible]न्याः ऋ. १०,१६३,१; १६२। अ. २०,९६,२२; २१५। १,३३,६; २९९

[illegible]नि ऋ. १०,१६३,५, १६६। २०,९६,२२; २१५। १,३३,६; २९९

[illegible]मिः अ. ९,८,१२; १८३। २०,९६,२०, २१३। २, ३३,४, २९७

[illegible]ष्ठिका ऋ. १०,१६३,१; १६२। अ. २०,९६,१७; २१०। २,३३,१; २९४

[illegible]-संधि अ. ९,१८,१८; २८९

[illegible]र्वं ऋ. १०,१६३,६; १६७। अ. २०,९६,२३; २१६। २,३३,७; ३००

[illegible] ऋ. १०,१६३,६; १६७। अ. २०,९६,२२; २१५। १,३३,६; २९९

[illegible] अ. ९,१८,११; २९२

[illegible] अ. ९,८,१५; २८६। अ. २०,९६,१९; २१२। १,३३,३; २९६

[illegible] ऋ. १०,१६३,४; १६५। अ. २०,९६,२१; २१४। १,३३,५; २९८

[illegible] अ. ९,८,१५, २८६

[illegible] ऋ. १०,१६३,४; १६५। अ. २०,९६,२१; २१४। १,३३,५; २९८

[illegible] ऋ. १०,१६३,३; १६४। अ. २०,९६,२०; २१३। १,३३,४; २१७

[illegible] ऋ. १०,१६३,३; १६४। अ. २०,९६,१९; २१२। १,३३,३; २९६

[illegible] ऋ. १०,१६३,२; १६३। अ. २०,९६,१८, २११। १,३३,२; २९५

[illegible] ऋ. १०,१६३,४; १६५। अ. २०,९६,२१; २१४। १,३३,५; २९८। अ. ९,८,२१; २९२

[illegible] ऋ. १०,१६३,४; १६५। अ. २०,९६,२१, २१४। २,३३,५; २९८

मज्जा अ. ९,८,१८, २८९। अ. २०,९६,२२; २१५। २,३३,६; २९९

मतस्नौ ऋ. १०,१६३,३; १६४। अ. २०,९६,१९; २१२। २,३३,३; २९६

मस्तिष्कम् ऋ. १०,१६३,१; १६२। अ. २०,९६,१७; २१०। २,३३,१; २९४

मुष्कौ अ. ६,१२७,२; १८६

मूर्धा अ. ९,८,१३; २८७

मेहनम् ऋ. १०,१६३,५, १६६

यकृत्-यकन् ऋ. १०,१६३,३; १६४। अ. २०,९६,१९; २१२। अ. २,३३,३; २९६

लोम-मानि ऋ. १०,१६३,५-६; १६६-१६७। अ. २०, ९६,२३; २१६। २,३३,७; ३००

वक्षणाः अ. ९,८,१६, २८७

वनंकरणम् ऋ. १०,१६३,५; १६६

वनिष्ठुः ऋ. १०,१६३,३; १६४। अ. २०,९६,२०; २१३। २,३३,४; २९७

शीर्षन् अ. ९,८,१-५,१२; २७१-७६,२९३

शीर्षन् ( शीर्षण्यम् ) ऋ. १०,१६३,१, १६२। अ. २०, ९६,१७, २१०। २,३३,१; २९४

श्रोणी ऋ. १०,१६३,४; १६५। अ. २०,९६,२१, २१४। २,३३,५; २९८। अ. ९,८,११: २९२

सीमन्-मा अ. ९,८,१३: २८४

स्नावन्-वा ऋ. १०,१६३,४; १६५। अ. २०,९६,२२; २१५। २,३३,६, २९९

हलीक्ष्णम् ऋ. १०,१६३,३; १६५। अ. २०,९६,१९; २१२। २,३३,३; २९६

हृदयम् ऋ. १०,१६३,३; १६४। अ. २०,९६,१९; २१२। २,३३,३; २९६। अ. ९,८,८,१२,१४,२१; २७९,२८३; २८५,२९३

## ( ३ ) गुणबोधकपदसहिताः यक्ष्मभेदाः ।

[illegible] विसल्पकः अ. ६,१२७,३; १८७

[illegible] ११,१,२; २१८

[illegible] ९,८,५; २७६

*

क्षंगभेदः ९,८,५; २७६। ९,८,२२; २९३

अंग्यः विसल्पकः ६,१२७,३; १८७

अज्ञातः यक्ष्मः ६,१२७,३; १८७

## ( ४ ) दीर्घायुत्वपर्यायाः ।

आयुः ३,११,१-११; १६८-७८ । १२,२,२५; २४१
आयुः दीर्घम् ११,२,६,३२,५५; २२२,२४८,२७१
आयुः द्राघीयः १२,२,३०; २४६
आयुः सर्वम् १०,९६,१०; २०९ । १२,२,२४; २४०
आयुः शतम् १०,९६,८-९; २०७-८
आयुः जरसम् १२,२,२४; २४०

शतं वसन्ताः २०,९६,९; २०८
शतं शरदः २०,९६,९; २०८
शतं हेमन्ताः २०,९६,९; २०८
शतं हिमाः १२,२,८; २४४
शतशारदम् २०,९६,७; २०६

## ( ५ ) भैषज्यम् ।

### ओषधयः ।

गुल्गुलुः १९,३८,१-३; २०१-४
गुल्गुलु, सैन्धवम् १९,३८,२; २०३
गुल्गुलु समुद्रियम् १९,३८,२; २०३
गुल्गुलोः सुरभिः गन्धः १९,३८,१; २०२
पं. द्रुः ६,१२७,२, १८६
व्राः ६,९१,१८; १९९

वरणः ( वनस्पतिः देवः ) ६,८५,१; १८२
वनस्पतिः ६,१२७,१; १८५

### ( २ ) अन्ये पदार्थाः ।

आपः ३,७,५; १९६ । ६,९१,३; २०१
हरिणस्य शीर्षणि भेषजम् ३,७,१; १९२
हरिण-विषाणम् ३,७,१-२; १९-१९३

# ओषधिवनस्पतयः ।

## ओषधिदेवता-गुणबोधक पदानि ।

| पदानि । स्थानम् । | विशेषनाम । |
|---|---|
| अंशुमत्यः अ० ८,७,४; ३२७ | ओषधयः |
| ...ः शाखः अ० ८,७,८; ३३१ | ओषधयः |
| ...आपः अ० ८,७,३; ३२६ | ओषधयः |
| ...ओषधीनाम् एषि ४,१९,३, ३५८ | अपामार्गः |
| ...मधुमत् ८,७,१२; ३३५ | ओषधयः |
| ...भ्राता पिता ५,५,८, ४३५ | लाक्षा |
| ...विदभेषजी ६,१०९,१; ४१३ | पिप्पली |
| ...शान् जगताम् १९,३९,४, ४५० | कुष्ठः |
| ...ः ६,२१,३; ४५९ | रेवतीः |
| ...युः ६,१६,१, ४६६ | विशेषनाम |
| ...मूर्तं आशाम् ८,७,१२; ३३५ | ओषधयः |

| पदानि । स्थानम् । | विशेषनाम । |
|---|---|
| अपक्रीताः ८,७,११; ३३४ | ओषधयः |
| अपां स्वसा ५,५,७; ४३४ | लाक्षा |
| अपां गर्भः ८,७,८; ३३१ | ओषधयः |
| अपामार्गः ४,१७,१-८ । १८,१-८ । १९,१-८ । ७,६५,१-३; ३८०-४०६ | विशेषनाम |
| अपुष्पाः ऋ० १०,९७,१५; ३१५ | ओषधयः |
| अफलाः ऋ० १०,९७,१५, ३१५ । ८,७,२७; ३५० | ओषधयः |
| अबन्धुकृत् ४,१९,१; ३१६ | अपामार्गः |
| असिदीपयन् ४,१९,३; ३९८ | अपामार्गः |
| अभिष्टुताः ८,७,११; ३३४ | ओषधयः |
| अमृतस्य भक्षः ८,७,१२; ३३५ | ओषधयः |

…वन्ती ८,७,६; ३१९ विशेषनाम
…वन्तो नाम पिता १९,३९,३; ४४९ कुष्ठः
…वला ८,७,६; ३१९ वि. नाम
…वला नाम ते माता १९,३९,३; ४४९ कुष्ठः
…वला ६,५९,३; ४०९ अरुन्धती
…प्रियः वा. य. २८,१०; ३७५ वनस्पतिः (यूपः)
…नाशनः ५,४,१-२; ४३७-४३८ कुष्ठः
…स्तम्बः ८,७,९; ३३१ ओषधयः
…शीमती ४,१९,१; ३९७ अपामार्गः
…ता पाकस्य ४,१९,३; ३९८ अपामार्गः
…नाम; १९,३९,१; ४४७ कुष्ठः
…र्थः अश्वत्थः वीरुधाम् ८,७,२०; ३४३ अश्वत्थः
…न्वाः ८,७,३,१४; ३२६,३४७ ओषधयः
…रः १९,३९,१; ४४७ कुष्ठः
…राः वा. य. ५,४२-४३; ३७०-३७१ । २०,४५;
…२८,४३; ३७७। २९,३५; ३७९ वनस्पतिः (यूपः)
…वीः ऋ. १०,९७,४; ३०४ ओषधयः
…वी ६,१३६,१; ४६० नितत्नी
…सूता ३,१८,१; ३६५ उत्तानपर्णी
…र्वं प्रजानन् २९,१०; ३७८ वनस्पतिः (यूपः)
…वदना ५,४,३; ४३९ अश्वत्थः
…भ्यः त्रियुगं पुरा ऋ. १०,९७,१; ३०१ ओषधयः
…वो स्वसा ५,५,१; ४२८ लाक्षा
…पिता ८,७,२; ३२५ ओषधयः
…र्वं प्रतिष्यन्तीः ऋ. १०,९७,८; ३०८ ओषधयः
…रः ५,५,५; ४३२ वि. नाम
…नि शतम् ऋ. १०,९७,२; ३०२ ओषधयः
…नि शतं सदा च ऋ. १०,९७,१; ३०१ ओषधयः
…बोधा वा. य. २८,१०; ३७५ वनस्पतिः (यूपः)
…तः ऋ. ३,५७,३; ३६३ ओषधयः
…८,७,८; ३३१ ओषधयः
…नाशः १९,३९,१; ४४८ कुष्ठः
…नम् १९,३९,२; ४४८ कुष्ठः
…शीः ८,७,६; ३२९ ओषधयः
…शीः १९,३९,२; ४४८ कुष्ठः
…पिता ५,५,१; ४२८ लाक्षा

नमस्यन्तीः ऋ. ३,५७,३; ३६३ ओषधयः
नितत्नी ६,१३६,१; ४६० वि. नाम
निषदनं अश्वत्थे ऋ. १०,९७,५; ३०५ ओषधयः
निष्कृतिः ५,५,६; ४३३ लाक्षा
निष्कृतिः ऋ. १०,९७,९; ३०९ ओषधयः
नीलागलसाला ६,१६,४; ४६९ वि. नाम
न्यग्रोधः ५,५,५; ४३२ वि. नाम
न्यञ्चनी जनानाम् ५,५,१; ४२८ लाक्षा
पतत्रिणी ५,५,९; ४३६ लाक्षा
पतत्रिणीः ऋ. १०,९७,९; ३०९ ओषधयः
पयस्वतीः ८,७,१७; ३४० ओषधयः
परागताः दूरम् ऋ. १०,९७,२१; ३२१ ओषधयः
परिष्ठाः ऋ. १०,९७,१०; ३१० ओषधयः
पर्णः ५,५,५; ४३२ वि. नाम
पर्णं मधुमत् ८,७,१२, ३३५ ओषधयः
पर्णे वसतिः ऋ. १०,९७,५; ३०५ ओषधयः
पर्युक्ता कण्वेन नार्षदेन ४,१९,२; ३९७ अपामार्गः
पाकस्य भ्राता ४,१९,३; ३९८ अपामार्गः
पारयिष्णवः ऋ. १०,९७,३; ३०३ ओषधयः
पिता अजबभ्रुः ५,५,८; ४३५ (सिलाची) लाक्षा
पिता द्यौः ८,७,२; ३२५ ओषधयः
पिता नभः ५,५,१; ४२८ (सिलाची) लाक्षा
पिता विमिन्दिन् नाम ४,१९,५; ४०० अपामार्गः
पिता विहल्हो नाम ६,१६,२; ४६७ आबयुः
पितामहः अर्यमा ५,५,१; ४२८ लाक्षा
पिप्पली–ल्यः ६,१०९,१-२; ४१३-४१४ वि. नाम
पुनर्नवाः ८,७,८; ३३१ ओषधयः
पुनः सरा ४,१७,२; ३८१ अपामार्गः
पुरुषजीवनीः ८,७,४, ३२७ ओषधयः
पुष्पा ८,७,६; ३२९ वि. नाम
पुष्पं मधुमत् ८,७,१२; ३३५ ओषधयः
पुष्पिणीः ऋ. १०,९७,१५; ३१५ ओषधयः
पुष्पवतीः ऋ. १०,९७,३; ३०३ । अ. ८,७,२७;
३५० ओषधयः
पूर्वा जाताः ऋ. १०,९७,१; ३०१ ओषधयः
पृथिवी माता ८,७,२; ३२५ ओषधयः

| | |
|---|---|
| ...४,१७,८; ३८७ | अपामार्गः |
| ...तीः पर्णो वः ऋ. १०,९७,५; ३०५ । वा० य० १२,७९; ३५,४; ३५८ | ओषधयः |
| ...: आत्मा ५,५,७; ४३४ | लाक्षा |
| ...कृतस्य भेषजी ६,१०९,३; ४१५ | पिप्पली |
| ...शानाः पुत्रम् ऋ. ३,५७,३; ३६३ | ओषधयः |
| ...न्दन् नाम पिता ४,१९,५; ४०० | अपामार्गः |
| ...विदन्तो ४,१९,५; ४०० | अपामार्गः |
| ...: ८,७,१०; ३३३ | ओषधयः |
| ...शाखाः ८,७,४; ३२७ | ओषधयः |
| ...: ऋ. १०,९७,१०; ३१० | ओषधयः |
| ...वीर्यः १९,३९,१०; ४५६ | कुष्ठः |
| ...भेषजः १९,३९,५-९; ४५१-४५५ | कुष्ठः |
| ...भेषजी ६,१३६,३; ४६२ | नितत्नी |
| ...भेषजीः ८,७,२६; ३४९ | ओषधयः |
| ...मुखः ७,६५,२; ४०५ | अपामार्गः |
| ...रूपा ६,५९,३; ४०९ | अरुन्धती |
| ...भूतस्य गर्भः ६,९५,३; ४१२ | कुष्ठौषधिः |
| ...रूपाः ८,७,१०; ३३३ | ओषधयः |
| ...: वा. य. ५,४२; ३७० | वनस्पतिः ( यूपः ) |
| ...ताः पृथिवीं अनु ऋ. १०,९७,१९; ३१९ | ( यूपः ) |
| ...हो नाम ते पिता ६,१६,२; ४६७ | आबयुः |
| ...: ऋ. १०,९७,३,२१; ३०३,३२१ । ८,७,२; ३१५ | सामान्यवाची |
| ...णां पतिः ४,१९,४; ४०३ | अपामार्गः |
| ...णां बलवत्तमा ३,१८,१, ३६४ | उत्तानपर्णी |
| ...णां बलवत्तमः ५,४,१; ४३७ | कुष्ठः |
| ...णां वसिष्ठः ६,२१,२; ४५८ | चन्द्रमाः |
| ...: त्वमस्य: तव ऋ. १०,९७,२३; ३२३ | सोमः |
| ...: ८,७,४; ३२७ | ओषधयः |
| ...: ८,७,२०; ३४३ | वि. नाम |
| ...: वा. य. २८,१०,३३; ३७५-३७६ | वनस्पति ( यूपः ) |
| ...: ऋ. १०,९७,२; ३०२ | ओषधयः |
| ...: वा. य. ५,४३; ३७१ | वनस्पतिः ( यूपः ) |
| ...ा ६,३०,२; ४७१ | शमी |
| ...: ऋ. १०,९७,१८; ३१८ । ६,९६,१; ३५१ | ओषधयः |
| शतशाखा ४,१९,५; ४०० | अपामार्गो वनस्पतिः |
| शपथयावनी ४,१७,२; ३८१ | अपामार्गो वनस्पतिः |
| शमिता वा. य. ११,२१; २७,११; २८,१०,३३; ३७३-३७६ | वनस्पतिः ( यूपः ) |
| शमी ६,३०,३; ४७२ | वि. नाम |
| शश्वतां भर्त्री ५,५,२; ४२९ | लाक्षा |
| शिवाः ८,७,१७; ३४० | ओषधयः |
| शुक्राः ८,७,१; ३२४ | ओषधयः |
| शुष्मा ५,५,७; ४३४ | लाक्षा |
| सजित्वरीः ऋ. १०,९७,३; ३०३ | ओषधयः |
| सत्यजित् ४,१७,१; ३८१ | अपामार्गः |
| सनिष्यन्तीः धनम् ऋ. १०,९७,८; ३०८ | ओषधयः |
| सन्तन्वन्ती भूमिम् ८,७,१६; ३३९ | ओषधयः |
| समुद्रः मूलम् ८,७,२; ३१५ | ओषधयः |
| सम्पतिता अश्वस्य अस्नः ५,५,९; ४३६ | लाक्षा |
| सम्भक्ता मधोः ८,७,१२; ३३५ | ओषधयः |
| सरा ५,५,९; ४३६ | लाक्षा |
| सहमानाः ८,७,५; ३२८ | ओषधयः |
| सहमानाः २,२५,२; ४१७ | पृश्निपर्णी |
| सहमानाः ४,१७,१; ३८१ | अपामार्गः |
| सहस्रधामा ४,१८,४; ३९१ | अपामार्गः |
| सहस्रनाम्नीः ८,७,८; ३३१ | ओषधयः |
| सहस्रपर्ण्यः ८,७,१३; ३३६ | ओषधयः |
| सहस्वती ३,१८,२,५; ३६५,३६८ | उत्तरा उत्तानपर्णा वा |
| सहस्वती २,२५,१; ४१६ | पृश्निपर्णी |
| सासहिः ३,१८,५; ३६८ | उत्तरा |
| सिलाची ५,५,१,८; ४२८,४३५ | लाक्षा |
| सिलाञ्जाला ६,१६,४; ४६९ | आबयुः |
| सिषासवः ६,११,३; ४५९ | रेवतीः केशवर्धनीः |
| सीराः ऋ. १०,९७,९; ३०९ | ओषधयः |
| सुपर्णाः ८,७,२४; ३४७ | ओषधयः |
| सुपिप्पलाः वा. य. ११,४८; ३५७ | ओषधयः |
| सुभगा ३,१८,२; ३६५ | उत्तानपर्णी |
| सुभगा ६,५९,३; ४०९ | अरुन्धती |
| सुभगा ५,५,६-७; ४३३-४३४ | लाक्षा |
| सुभगा ६,३०,३; ४७२ | शमी |

# रोगचिकित्सान्तर्गता ओषधयः ।

# रोगचिकित्सा ।

## ( १ ) रोगाणां नामानि, तेषां गुणबोधकपदानि च ।

**अपचितः गण्डमालाः वा ( ५०३-५१६ )**

अपचित्-तः ६,८३,१,३; ५१३,५१५
अरसतराः सेहोः ७,७६,१; ५०७
असुत्तराः असतीभ्यः ७,७६,१; ५०७
अवीरघ्नीः ६,८३,२; ५१४
असूतिवत् ६,८३,३; ५१५
उपपक्ष्याः अपचितः ७,७६,२; ५०८
एनी ६,८३,१; ५१४
कक्षुदिश्रितः ७,७६,३; ५०९
कीकसाः प्रस्तृणाति यः ७,७६,३; ५०९
कृष्णा ६,८३,२; ५१४
गलुन्तः ६,८३,३; ५१५
ग्रैव्याः अपचितः ७,७६,२; ५०८
ग्लौः ६,८३,३; ५१५
जायान्यः ७,७६,३-५; ५०९-५११
तलीद्यं अवतिष्ठमाना ७,७६,३; ५०९
माता यासां कृष्णा ७,७४,१; ५०३
रामायणी ६,८३,३; ५१५
रोहिणी ६,८३,२; ५१४
लोहिनी ७,७४,१; ५०३
विक्लेदीयसीः लवणात् ७,७६,१; ५०७
विजाम्नि याः अपचिताः ७,७६,२, ५०८
श्येनी ६,८३,२; ५१४
सुस्रसः सुस्रसः ७,७६,१; ५०७
स्वयंस्रसः ७,७६,२; २

**अलक्ष्मी दोषः । १,१८,१-४; ६७३-७६**

**इषु- ( वेधः ) । ६,१०,१-३; ६२०-६२२**

इषुः अस्यमाना १,३; ६२०,६२२
इषुः निपतिता ३; ६२२
इषुः प्रतिहिता ३; ६२२
इषुः विसृज्यमाना ३; ६२२

**ईर्ष्या । ६८२-६८६**

अग्निः हृदय्यः ६,१८,१; ६८२
मनस्कं पतयिष्णुकम् ६,१८,३; ६८४
मृतं मनः ईर्ष्योः ६,१८,२; ६८३
शोकः हृदय्यः ६,१८,१; ६८२

**उन्मत्तता । ६,१११,१-४; ६८७-६९०**

उन्मत्तं रक्षसस्परि ६,१११,३; ६८९
उन्मदितं देव एनसात् ६,१११,३; ६८९
उद्युतं मनः ६,१११,२, ६८८
सुयतः लालपीति यः ६,१११,१; ६८७

**कासा । ६,१०५,१-३; ४८६-४८८**

**क्षेत्रियरोगः । २,८,१-५; ४९३-९७**

अभिक्रत्वरीः २; ४९४

**ज्वरः । १,२५,१-४ । ७,११६,१-२, ५२५-३०**

अन्येद्युः अभ्येता १,२५,४; ५२८ । ७,११६,२; ५३०
अभिशोकः १,२५,३; ५२७
अर्चिः १,२५,२; ५२६
अव्रतः ७,११६,२; ५३०
उभयद्युः १,२५,४; ५२८ । ७,११६,२; ५३०
च्यवनः ७,११६,१; ५२९
जनित्रं शकल्येषि १,२५,२; ५२६
तक्मा १,२५,१-४, ५२५-२८
तृतीयकः १,२५,४; ५२८
धृष्णुः ७,११६,१; ५२९
नोदनः ७,११६,१; ५२९
पुत्रः राज्ञः वरुणस्य १,२५,३; ५२७
पूर्वकामकृत्वन् ७,११६,१; ५२९
रूरः १,२५,४; ५२८ । ७,११६,१; ५२९
वरुणस्य पुत्रः १,२५,३; ५२७
शकल्येषि जनित्रम् १,२५,२; ५२६
शीतः १,२५,४; ५२८ । ७,११६,१, ५२९
शोकः १,२५,३; ५२७
शोचिः १,२५,२,४; ५२५,५२८

इदं सूक्तं क्षेत्रियरोगनाशनपरम्, न यक्ष्मनाशनपरम्। 'यक्ष्मनाशनम्' नाम स्वतन्त्रं प्रकरणं ( १६१-३०० मंत्रांकाः ) अस्यां संहितायां वर्तते।

## ( २ ) रोगाणां परिहार-साधनानि ।

**अपचितः गण्डमाला वा ।**

मुनेः देवस्य मूलम् ७,७४,१; ५०३

त्वाष्ट्रं वचः ७,७४,३; ५०५

**इषुनिष्कासनम् ।**

**ईर्ष्यापनयनम् ।**

भेषजम् ७,४५,१; ६८५

**उन्मत्ततामोचनम् ।**

भेषजम् ६,१११,१-३; ६८८-६८९

**कासा-शमनम् ।**

**क्षेत्रियरोगनाशनम् ।** २,८,१-५; ४९३-९७

क्षेत्रियनाशनी वीरुत् २-५; ४९४-९७

तिलस्य तिलपिञ्जी ३; ४९५

यवस्य पलाली अर्जुनकाण्डस्य ३; ४९५

यवस्य पलाली बभ्रोः ३, ४९५

विचृतौ नाम तारके १; ४९३

ईशायुवेभ्यः क्षेत्रस्य पतये लांगलेभ्यः सनिस्रसाक्षेभ्यः

सन्देरयेभ्यः च नमस्कृतिः ४-५; ४९६-९७

**ज्वरनाशनम् ।**

**तक्मनाशनम् ।**

**दुःष्वप्ननाशनम् ।**

**बलासनाशनम् ।**

**मूत्रमोचनः ।**

प्र ते भिनद्मि मेहनम् १,३,७; ५७७

विषितं ते वस्तिबिलम् १,३,८; ५७८

**यक्ष्मनाशनम् ।** २,८,१-५; ४९३-९६

इदं सूक्तं न यक्ष्मनाशनम् [ स्वतन्त्रं प्रकरणं द्रष्टव्यम् १६१-३०० ]

**रुधिरास्रावनिवृत्तिः ।**

रोहितः हिराः लोहितवाससः धमन्यः अभ्रातरः इव जामयः

तिष्ठन्तु १,१७,१; ५५५

आस्रावभेषजम् ६,४४,१; ५६०

रुद्रस्य मूत्रम् ६,४४,३; ५६१

वातीकृतनाशनी ६,४४,३, ५६१

विषणका नाम ६,४४,३; ५६१

अन्वास्रावम् २,३,२, ५६६

अरुस्राणम् २,३,३,५; ५६७-५६९

अरोगणम् २,३,२; ५६६

आस्रावस्य भेषजम् २,३,३-५; ५६७-६९

**श्वेतकुष्ठनाशनम् ।**

असिक्नी ( वनस्पतिः ) १,२३,१-४; ५१७-२०

असितं आस्थानम् १,२३,३; ५१९

असितं प्रलयनम् १,२३,३; ५१९

आसुरी ( वनस्पतिः ) १,२४,१-४; ५११-२४

किलासनाशनम् १,२४,२; ५२१

किलासभेषजम् १,२४,२; ५२२

कृष्णा १,२३,१; ५१७

पृथिव्या अधि उद्भृता १,२४,४; ५२४

रामा १,२३,१; ५१७

श्यामा १,२४,४; ५२४

सरूपंकरणी १,२४,४; ५२४

सरूपकृत् १,२४,३; ५२३

सरूपो नाम पिता १,२४,३; ५२३

सरूपा नाम माता १,२४,३; ५२३

**हरिमा- ( हृद्रोग-कामिला नाशनम् ) ।**

**नाशनम् ।** १,२२,१-४; ४८९-९२

रोगघ्न्यः उपनिषदः ऋ १,५०,११-१३; ५४५-४७

रोपणाकासु ध्मानम् १,२२,४; ४९२ । ऋ. १,५०, १२; ५४६

रोहितैः वर्णैः ध्मानम् १,२२,२; ४९०

रोहितस्य वर्णेन ध्मानम् १,२२,१; ४८९

रोहिणीभिः ध्मानम् १,२२,३; ४९१

रोहिणीः देवत्याः गावः ताभिः ध्मानम् १,२२,३; ४९१

शुकेषु ध्मानम् १,२२,४; ४९२ । ऋ. १,५०,१२; ५४६

हारिद्रवेषु ध्मानम् १,२२,४; ४९२। ऋ. १,५०,१२;५४६

## ( ३ ) भैषज्यम् ।



# क्रिमिनाशनम् ।

### ( १ ) क्रिमीणां विविधप्रकाराः, तेषां गुणबोधकपदानि च ।

× इदं पदद्वयं क्रिम्यर्थे न प्रतिभाति ।

विश्वरूपः ५,२३,५; ७०० । २,३१,२; ७१०
वेशसः २,३१,५; ७१३
न्यध्वरः २,३१,४; ६९४
शिखण्डी ४,३७,७; ७२१
शितिकक्षाः ५,२३,५; ७००
शितिबाहवः ५,२३,५; ७००
शिपवित्नुकाः ५,२३,७; ७०२
शिष्टाः २,३१,३; ६९३
शीर्षण्यः २,३१,४; ६९४

श्वा इव ४,३७,११; ७२५
सरूपौ ५,२३,४; ६९९
सहमूराः ५,२९,११; ७४८
सारङ्गः २,३१,२; ७१० । ५,२३,९; ७०४
स्थपतिः २,३१,४; ७१२
हतभ्राता २,३१,४; ७१२
हतमाता २,३१,४; ७१२
हतस्वसा २,३१,४; ७१२
हविरदाः ४,३७,८-९; ७१२-७२३

## ( २ ) ओषधिनामानि ।

### तासां गुणबोधकपदानि च ।

अजशृङ्गी ४,३७,२,६; ७१६,७२०
अराटकी ४,३७,६; ७२०
अर्जुनाः ४,३७,५; ७१९
अश्वत्थाः ४,३७,४; ७१८ ( महावृक्षाः )
आघाटाः ४,३७,५; ७१९
ओषधिः देवी ४,२०,१; ७५५
ओषधीनां वीरुधां वीर्यावती ४,३७,६; ७२०
औक्षगन्धिः ४,३७,३; ७१७
कर्कर्यः ४,३७,५; ७१९
गुल्गुलः ४,३७,३; ७१७

तीक्ष्णशृङ्गी ४,३७,६; ७२०
नलदी ४,३७,३; ७१७
न्यग्रोधाः ४,३७,४; ७१८ ( महावृक्षाः )
पीला ४,३७,३; ७१७
प्रमन्दनी ४,३७,३; ७१७
ब्रह्म ४,३७,११; ७२५
विश्वतोवीर्या वीरुत् ६,३२,१; ७३१
शिखण्डिनः ४,३७,४; ७१८ ( महावृक्षाः )
हरिताः ४,३७,५, ७१९

# विषनाशनम् ।

## ( १ ) विष-उत्पत्ति-हेतवः ।

अंश्याः ऋ. १,१९१,७; ७८०
अग्निविषम् १०,४,२२; ८२९
अग्निजाः सर्पाः १०,४,२३; ८३०
अघाश्वः १०,४,१०; ८१७
अङ्ग्याः ऋ. १,१९१,७; ७८०
अदृष्टाः ऋ. १,१९१,१-८; ७७४-७८१
अपोदकाः ५,१३,६; ८३९
अप्सुजाः सर्पाः १०,४,२३; ८३०
अलीकाः ५,१३,६; ८३९
असिक्न्या दासी ५,१३,८; ८४१

असितं-ताः १०,४,५,१३; ८१२,८२० । ५,१३,५-६; ८३८-८३९
अहिः-हयः १०,४,६,८-९,१६-१७,१९-२१,२६; ८१३,८१५-१६,८२३-२४,८२६-२८,८३३ । ७,८८,१; ८४५ । ६,५६,१; ८४९
आलिगी ५,१३,७; ८४०
उपतृण्यः ५,१३,५; ८३८
उरुगूलायाः दुहिता ५,१३,८; ९४१
ओषधिः ४,६,८; ७९७
ओषधिजाः सर्पाः १०,४,२३; ८३०

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ४
निराहावान् कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम् ५
इष्कृताहावमवतं सुवरत्रं सुषेचनम् । उद्रिणं सिञ्चे अक्षितम् ६
प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्र— मंसत्रकोशं सिञ्चता नृपाणम् ७
व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ८ ७७०
आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद् यवसेव गत्वी सहस्रधारा पयसा मही गौः ९
आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परि ष्वजध्वं दश कक्ष्याभि— रुभे धुरौ प्रति वह्निं युनक्त १०
उभे धुरौ वह्निरापिब्दमानो ऽन्तर्योनेव चरति द्विजानिः ।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ११
कपृन्नरः कपृथमुद् दधातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये १२ ७७४

॥ ७९ ॥ ( ऋ० १०।१०९।१-७ )

( ७७५-८१ ) जुहूर्ब्रह्मजाया, ब्राह्मः ऊर्ध्वनाभा वा । त्रिष्टुप्, ६-७ अनुष्टुप् ।

तेऽवदन् प्रथमा ब्रह्मकिल्बिषे ऽकूपारः सलिलो मातरिश्वा ।
वीळुहरास्तप उग्रो मयोभू— रापो देवीः प्रथमजा ऋतेन १ ७७५
सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।
अन्वर्तिता वरुणो मित्र आसी— दग्निर्होता हस्तगृह्या निनाय २
हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन् ।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ३
देवा एतस्यामवदन्त पूर्वे सप्तऋषयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ४
ब्रह्मचारी चरति वेविषद् विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ५ ७७९

पुनर्वै देवा अददुः पुनर्मनुष्या उत । राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ६ ७८०
पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् । ऊर्जं पृथिव्या भक्त्वायो—रुगायमुपासते ७ ७८१

॥ ८० ॥ ( ऋ० १०।११४।१-१० )

( ७८२-९१ ) सध्रिर्वैरूपो, घर्मो वा तापसः । त्रिष्टुप्, ४ जगती ।

घर्मा समन्ता त्रिवृतं व्यापतु—स्तयोर्जुष्टिं मातरिश्वा जगाम ।
दिवस्पयो दिधिषाणा अवेषन् विदुर्देवाः सहसामानमर्कम् १
तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः ।
तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु २
चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा नि षेदतु—र्यत्र देवा दधिरे भागधेयम् ३
एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमन्तित—स्तं माता रेळ्हि स उ रेळ्हि मातरम् ४ ७८५
सुपर्णं विप्राः कवयो वचोभि—रेकं सन्तं बहुधा कल्पयन्ति ।
छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ५
षट्त्रिंशांश्च चतुरः कल्पयन्त—श्छन्दांसि च दधत आद्वादशम् ।
यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति ६
चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयन्ति सप्त ।
आप्नानं तीर्थं क इह प्र वोच—द्येन पथा प्रपिबन्ते सुतस्य ७
सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित् तत् ।
सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्ठितं तावती वाक् ८
कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।
कमृत्विजामष्टमं शूरमाहु—र्हरी इन्द्रस्य नि चिकाय कः स्वित् ९ ७९०
भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।
श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः १० ७९१

॥ ८१ ॥ ( ऋ० १०।१२६।१-८ )

( ७९२-९९ ) शैलूषिः कुल्मलबर्हिषो, वामदेव्योंऽहोमुग्वा । उपरिष्टाद्बृहती, ८ त्रिष्टुप् ।

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विषः १ ७९२

तद्धि वयं वृणीमहे वरुण मित्रार्यमन् ।
येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः २
ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा ।
नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः ३
यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा ।
युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः ४ ७९५
आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा ।
उग्रं मरुद्भी रुद्रं हुवेमे-न्द्रमग्निं स्वस्तयेऽति द्विषः ५
नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः ६
शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा ।
शर्म यच्छन्तु सप्रथ आदित्यासो यदीमहे अति द्विषः ७
यथा ह त्यद् वसवो गौर्यं चित् पदि षिताममुञ्चता यजत्राः ।
एवो ष्व१स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ८ ७९९

॥ ८२ ॥ ( ऋ० १०।१२८।१-९ )

( ८००-८०८ ) विहव्य आङ्गिरसः । त्रिष्टुप्, ९ जगती ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्र-स्त्वयाध्यक्षेण पृतना जयेम १ ८००
मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् २
मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारो वनुषन्त पूर्वे ऽरिष्टाः स्याम तन्वा सुवीराः ३
मह्यं यजन्तु मम यानि हव्या ऽऽकूतिः सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ४
देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभि-र्मा रधाम द्विषते सोम राजन् ५
अग्ने मन्युं प्रतिनुदन् परेषा-मदब्धो गोपाः परि पाहि नस्त्वम् ।
प्रत्यञ्चो यन्तु निगुतः पुनस्ते-ऽमैषां चित्तं प्रबुधां वि नेशत् ६ ८०५

धाता धातॄणां भुवनस्य यस्पतिं देवं त्रातारमभिमातिषाहम् ।
इमं यज्ञमश्विनोभा बृहस्पतिं देवाः पान्तु यजमानं न्यर्थात् ७
उरुव्यचा नो महिषः शर्म यंसदस्मिन् हवे पुरुहूतः पुरुक्षुः
स नः प्रजायै हर्यश्व मृळये न्द्र मा नो रीरिषो मा परा दाः ८
ये नः सपत्ना अप ते भवन्त्वि न्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ९ ८०८

॥ ८३ ॥ ( ऋ० १०।१३७।१-७ )

( ८०९-१५ ) [ सप्तर्षयः ]- १ भरद्वाजः, २ कश्यपः, ३ गोतमः, ४ अत्रिः, ५ विश्वामित्रः, ६ जमदग्निः, ७ वसिष्ठः । अनुष्टुप् ।

उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवा जीवयथा पुनः १
द्वाविमौ वातौ वात आ सिन्धोरा परावतः । दक्षं ते अन्य आ वातु परान्यो वातु यद् रपः २ ८१०
आ वात वाहि भेषजं वि वात वाहि यद् रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ३
आ त्वागमं शन्तातिभि रथो अरिष्टतातिभिः । दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ४
त्रायन्तामिह देवा स्त्रायतां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ५
आप इद् वा उ भेषजी रापो अमीवचातनीः । आपः सर्वस्य भेषजी स्तास्ते कृण्वन्तु भेषजम् ६
हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ७ ८१५

॥ ८४ ॥ ( ऋ० १०।१४१।१-६ )

( ८१६-२१ ) अग्निस्तापसः । अनुष्टुप् ।

अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव ।
प्र नो यच्छ विशस्पते धनदा असि नस्त्वम् १
प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः । प्र देवाः प्रोत सूनृता रायो देवी ददातु नः २
सोमं राजानमवसे ऽग्निं गीर्भिर्हवामहे । आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ३
इन्द्रवायू बृहस्पतिं सुहवेह हवामहे । यथा नः सर्व इज्जनः संगत्यां सुमना असत् ४
अर्यमणं बृहस्पति मिन्द्रं दानाय चोदय । वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ५ ८२०
त्वं नो अग्ने अग्निभि र्ब्रह्म यज्ञं च वर्धय । त्वं नो देवतातये रायो दानाय चोदय ६ ८२१

॥ ८५ ॥ ( ऋ० १०।१५५।५ )

( ८२२ ) शिरिम्बिठो भारद्वाजः । अनुष्टुप् ।

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ५ ८२२

॥ ८६ ॥ (ऋ० १०।१५७।१-५) ×

(८२३-२७) भुवन आप्त्यः, साधनो वा भौवनः। द्विपदा त्रिष्टुप्।

इमा नु कं भुवना सीषधामे — न्द्रश्च विश्वे च देवाः १

यज्ञं च नस्तन्वं च प्रजां चा — ऽऽदित्यैरिन्द्रः सह चीक्लृपाति १। २

आदित्यैरिन्द्रः सगणो मरुद्भि — रस्माकं भूत्ववि॒ता तनूनाम् ३ ८२५

हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः २। ४

प्रत्यञ्चमर्कमनयञ्छचीभि — रादित् स्वधामिषिरां पर्यपश्यन् ३। ५ ८२७

॥ ८७ ॥ (ऋ० १०।१६५।१-५)

(८२८-३२) नैर्ऋतः कपोतः। त्रिष्टुप्।

देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम।

तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे १

शिवः कपोत इषितो नो अस्त्व — नागा देवाः शकुनो गृहेषु।

अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु २

हेतिः पक्षिणी न दभात्यस्मा — नाष्ट्र्यां पदं कृणुते अग्निधाने।

शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ३ ८३०

यदुलूको वदति मोघमेतद् यत् कपोतः पदमग्नौ कृणोति।

यस्य दूतः प्रहित एष एतत् तस्मै यमाय नमो अस्तु मृत्यवे ४

ऋचा कपोतं नुदत प्रणोद — मिषं मदन्तः परि गां नयध्वम्।

संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात् पतिष्ठः ५ ८३२

॥ ८८ ॥ (ऋ० १०।१६७।३)

(८३३) विश्वामित्र-जमदग्नी। जगती।

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।

तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ३ ८३३

॥ ८९ ॥ (ऋ० १०।१८१।१-३)

(८३४-३६) १ प्रथो वासिष्ठः, २ सप्रथो भारद्वाजः, ३ घर्मः सौर्यः। त्रिष्टुप्।

प्रथश्च यस्य सप्रथश्च नामा — ऽऽनुष्टुभस्य हविषो हविर्यत्।

धातुर्द्युतानात् सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः १ ८३४

× वा० य० १५,४६; अथर्व० २०,६३,१-३; १२४,४-६; सा० ४५२,१११०-११।

अविन्दन्ते अतिहितं यदासीद् यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात् सवितुश्च विष्णो-र्भरद्वाजो बृहदा चक्रे अग्नेः २ ८३५
तेऽविन्दन् मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम् ।
धातुर्द्युतानात् सवितुश्च विष्णो-रा सूर्यादभरन् घर्ममेते ३ ८३६

॥ ९० ॥ ( ऋ० १०।१८४।१-२ )

( ८३७-३८ ) त्वष्टा गर्भकर्ता, विष्णुर्वा प्राजापत्यः । अनुष्टुप् ।

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिञ्चतु प्रजापति-र्धाता गर्भं दधातु ते १
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवा-वा धत्तां पुष्करस्रजा २ ८३८

॥ ९१ ॥ [ ८३९-७६ ] ( वा० य० २।१२-१३,१८ )

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव १२
मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु ।
विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ १३ ८४०
सꣳस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वम् १८ ८४१

॥ ९२ ॥ ( वा० य० ४।११ )

दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्था नो असद्वशे ।
ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ११ ८४२

॥ ९३ ॥ ( वा० य० ५।३०,३५ )

इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि । ऐन्द्रमसि वैश्वदेवमसि ३०
ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित् ३५ ८४४

॥ ९४ ॥ ( वा० य० ६।१९,२४ )

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ।
दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा १९ ८४५
विश्वेषां देवानां भागधेयी स्थ २४ ८४६

॥ ९५ ॥ ( वा० य० ७।२१ )×

विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः २१ ८४७

× वा० य० ७।१२,१९,३३-३४ = दै० [ विश्वे देवाः ] २९४,९८,१,१६५,३१५; वा० य० ८,८।

॥ ९६ ॥ ( वा० य० ८।१५,१९,४७,५७-५८ )

समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानांꣳ सुमतौ यज्ञियानांꣳ स्वाहा १५
याँ२ आवह उशतो देव देवाँस्तान् प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽसुं घर्मꣳ स्वरातिष्ठतानु स्वाहा १९
विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि ४७ ८५०
विश्वे देवा अꣳशुषु न्युप्तः ५७। विश्वे देवाश्चमसेषून्नीतः ५८ ८५२

॥ ९७ ॥ ( वा० य० ९।३३ )

विश्वे देवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ३३ ८५३

॥ ९८ ॥ ( वा० य० ११।५८,६०,६५ )

विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् ५८
विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् ६० ८५५
विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ६५ ८५६

॥ ९९ ॥ ( वा० य० १२।७० )

घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्यावंवृत्स्व ७० ८५७

॥ १०० ॥ ( वा० य० १४।७,२०,२६ )

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानराया-
श्विनाध्वर्यू सादयतामिह त्वा ७
अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा
देवतादित्या देवता मरुतो देवता विश्वे देवा देवता बृहस्पतिर्देवतेन्द्रो देवता
वरुणो देवता २०
ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः २६ ८६०

॥ १०१ ॥ ( वा० य० १५।१४,५४ )

अधिपत्न्यासि बृहती दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता
त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे
अव्यथायै स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा
प्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च
ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु १४ ८६१

उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत *५४ ८६२
॥ १०२ ॥ ( वा० य० १७।७३ )

आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साधुया ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ७३ ८६३
॥ १०३ ॥ ( वा० य० १८।७६ )+

धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे ७६ ८६४
॥ १०४ ॥ ( वा० य० २०।११ )

त्रया देवा एकादश त्रयस्त्रिꣳशाः सुराधसः ।
बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा ११ ८६५
॥ १०५ ॥ ( वा० य० २१।१७ )

उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः । त्रिष्टुप् छन्द इहेन्द्रियं पष्ठवाड् गौर्वयो दधुः १७ ८६६
॥ १०६ ॥ ( वा० य० २१।५,१८ )

विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि ५
विश्वेभ्यो देवेभ्यः स्वाहा ×२८ ८६८
॥ १०७ ॥ ( वा० य० २४।२७,४० )

विश्वेभ्यो देवेभ्यः पृषतान् २७। खड्गो वैश्वदेवः विश्वेषां देवानां पृषतः ४० ८७०
॥ १०८ ॥ ( वा० य० २५।५-६ )❋

पार्श्वं विश्वेषां देवानामुत्तरम् ५। विश्वेषां देवानां प्रथमा कीकसा ६ ८७१
॥ १०९ ॥ ( वा० य० २७।२२ )

अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् । विश्वे देवा हविरिदं जुषन्ताम् २२ ८७२
॥ ११० ॥ ( वा० य० २९।६० )

विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालः ६० ८७४

* वा० य० १८,६१ ।
+ वा० य० १८,३१; ३३,४४,५२-५३,७७,९१,९४; ३४,५३=दै० [ विश्वे देवाः ] ४८२,५९४,४२१,४१७, ५२६-२७,३९१ ।
× वा० य० ३९,१३ । ❋ वा० य० २५।१४-२३,४३=दै० [ विश्वे देवाः ] १९-२८,८२७ ।

॥ १११ ॥ ( वा० य० ३६।१७ ) +

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव
शान्तिः सा मा शान्तिरेधि १७ ८७५

॥ ११२ ॥ ( वा० य० ३९।६ )

विश्वे देवा द्वादशे ६ ८७६

॥ ११३ ॥ ( अथर्व० १।९।१-२ )❀

(८७७-१०४३ ) अथर्वा । १ वसवः, इन्द्रः, पूषा, वरुणः, मित्रः, अग्निः, आदित्याः, विश्वे देवाः;
२ देवाः, सूर्यः, अग्निः, हिरण्यं । त्रिष्टुप् ।

अस्मिन् वसु वसवो धारयन्त्विन्द्रः पूषा वरुणो मित्रो अग्निः ।
इममादित्या उत विश्वे च देवा उत्तरस्मिन् ज्योतिषि धारयन्तु १
अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् २ ८७८

॥ ११४ ॥ ( अथर्व० १।१५।१-४ )

सिन्धवः, ( वाताः, पतत्रिणः ) । अनुष्टुप्, २ भुरिक्पथ्या पङ्क्तिः ।

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः ।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येण हविषा जुहोमि १
इहैव हवमा यात म इह संस्रावणा उतेमं वर्धयता गिरः ।
इहैतु सर्वो यः पशुरस्मिन् तिष्ठतु या रयिः २ ८८०
ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः । तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ३
ये सर्पिषः संस्रवन्ति क्षीरस्य चोदकस्य च । तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ४ ८८२

॥ ११५ ॥ ( अथर्व० १।२७।१-४ )

( स्वस्त्ययनकामः ) । चन्द्रमाः, इन्द्राणी च । अनुष्टुप्, १ पथ्यापङ्क्तिः ।

अमूः पारे पृदाक्वस्त्रिषप्ता निर्जरायवः ।
तासां जरायुभिर्वयमक्ष्या३वपि व्ययामस्यघायोः परिपन्थिनः १
विषूच्येतु कृन्तती पिनाकमिव बिभ्रती ।
विष्वक् पुनर्भुवा मनोऽसमृद्धा अघायवः २ ८८४

+ अथर्व १९।२।१,१४; = दै० [ विश्वे देवाः ] १०६९,१०८२ । ❀ अथर्व १,९,३-४ = दै० [ अग्निः ] ११४२-४३ ।
९ [ दै० विश्वे देवाः ]

न बहवः समशकन् नार्भका अभि दाधृषुः । वेणोरद्गा इवाभितोऽसंमृद्धा अघायवः ३ ८८५
प्रेतं पादौ प्र स्फुरतं वहतं पृणतो गृहान् । इन्द्राण्येतु प्रथमाजीतामुषिता पुरः ४ ८८६

॥ ११६ ॥ ( अथर्व० २।३४।१-५ )

१ पशुपतिः, २ देवाः, ३ अग्निः विश्वकर्मा, ४ वायुः प्रजापतिः, ५ आशीः । त्रिष्टुप् ।

य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम् ।
निष्क्रीतः स यज्ञियं भागमेतु रायस्पोषा यजमानं सचन्ताम् १
प्रमुञ्चन्तो भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतं शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः २
ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टानग्रे प्र मुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ३
ये ग्राम्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुष्टानग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संरराणः ४ ८९०
प्रजानन्तः प्रति गृह्णन्तु पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।
दिवं गच्छ प्रति तिष्ठा शरीरैः स्वर्गं याहि पथिभिर्देवयानैः ५ ८९१

॥ ११७ ॥ ( अथर्व० ३।३।२-३,५-६ )+

२ इन्द्रः, ३ वरुणः सोमः इन्द्रः, ५ इन्द्राग्नी, विश्वे देवाः, ६ इन्द्रः । त्रिष्टुप्, ३ चतुष्पदा भुरिकपङ्क्तिः, ५-६ अनुष्टुप् ।

दूरे चित् सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय विप्रम् ।
यद् गायत्रीं बृहतीमर्कमस्मै सौत्रामण्या दधृषन्त देवाः २
अद्भ्यस्त्वा राजा वरुणो ह्वयतु सोमस्त्वा ह्वयतु पर्वतेभ्यः ।
इन्द्रस्त्वा ह्वयतु विड्भ्य आभ्यः श्येनो भूत्वा विश आ पतेमाः ३
ह्वयन्तु त्वा प्रतिजनाः प्रति मित्रा अवृषत । इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन् ५
यस्ते हवं विवदत् सजातो यश्च निष्ट्यः । अपाञ्चमिन्द्र तं कृत्वाथेममिहाव गमय ६ ८९५

॥ ११८ ॥ ( अथर्व० ३।४।१-२, ४-७ ) ❀

इन्द्रः, १ पञ्च प्रदिशः, ४ अश्विनौ, मित्रावरुणौ, विश्वे देवाः, मरुतः, ५ द्यावापृथिवी । त्रिष्टुप्, १ जगती ४-५ भुरिक् ।

आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट् त्वं वि राज ।
सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्योऽभवेह १ ८९६

---

+ अथर्व० ३,३,१,४ = दै० [ अग्निः ] २१५९ । दै० [ अश्विनौ ] ६७२ । ❀ अथर्व० ३,४,३ = दै० [ अग्निः ] २१६० ।

त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः ।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो वि भजा वसूनि २
अश्विना त्वाग्रे मित्रावरुणोभा विश्वे देवा मरुतस्त्वा ह्वयन्तु ।
अधा मनो वसुदेयाय कृणुष्व ततो न उग्रो वि भजा वसूनि ४
आ प्र द्रव परमस्याः परावतः शिवे ते द्यावापृथिवी उभे स्ताम् ।
तदयं राजा वरुणस्तथाह स त्वायमह्वत् स उपेदमेहि ५
इन्द्रेन्द्र मनुष्याः३ः परेहि सं ह्यज्ञास्था वरुणैः संविदानः ।
स त्वायमह्वत् स्वे सधस्थे स देवान् यक्षत् स उ कल्पयाद् विशः ६ ९००
पथ्या रेवतीर्बहुधा विरूपाः सर्वाः संगत्य वरीयस्ते अक्रन् ।
तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह ७ ९०१

॥ ११९ ॥ ( अथर्व० ३।८।१-६ )

१ मित्रः, पृथिवी, वरुणः, वायुः, अग्निः; २ धाता, सविता, इन्द्रः, त्वष्टा, अदितिः; ३ सोमः, सविता, आदित्यः, अग्निः; ४ विश्वे देवाः, ५-६ सांमनस्यम् । त्रिष्टुप्; २,६ जगती; ४ चतुष्पदा विराड् बृहतीगर्भा, ५ अनुष्टुप् ।

आ यातु मित्र ऋतुभिः कल्पमानः संवेशयन् पृथिवीमुस्रियाभिः ।
अथास्मभ्यं वरुणो वायुरग्निर्बृहद् राष्ट्रं संवेश्यं दधातु १
धाता रातिः सवितेदं जुषन्तामिन्द्रस्त्वष्टा प्रति हर्यन्तु मे वचः ।
हुवे देवीमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा यथासानि ×२
हुवे सोमं सवितारं नमोभिर्विश्वानादित्याँ अहमुत्तरत्वे ।
अयमग्निर्दीदायद् दीर्घमेव सजातैरिद्धोऽप्रतिब्रुवद्भिः ३
इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत् ।
अस्मै कामायोप कामिनीर्विश्वे वो देवा उपसंयन्तु ४ ९०५
सं वो मनांसि सं व्रता समाकूतीर्नमामसि । अमी ये विव्रता स्थन तान् वः सं नमयामसि ५
अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत ६ ९०७

॥ १२० ॥ ( अथर्व० ३।१०।१,५-७,११-१३ ) *

अष्टका, १ धेनुः, ५ एकाष्टका, ६ जातवेदाः, पशवः, ७ रात्रिः, यज्ञाः, ११ देवाः, १२ इन्द्रः, देवाः, १३ प्रजापतिः । अनुष्टुप्; ५-६, १२ त्रिष्टुप्; ७ त्र्यवसाना षट्पदा विराड्गर्भातिजगती ।

प्रथमा ह व्युवास सा धेनुरभवद् यमे । सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् १ ९०८

अथर्व० ३,८,२ = दै० [ अदितिः० ] ७०८। *अथर्व० ३।१०,२-४,८-१० = दै० [ अदितिः ] ७०९,८८७,९४९,१०७५-७७।

वानस्पत्या ग्रावाणो घोषमक्रत हविष्कृण्वन्तः परिवत्सरीणम्।
एकाष्टके सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम् ५ ९०९
इडायास्पदं घृतवत् सरीसृपं जातवेदः प्रति हव्या गृभाय।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु ६ ९१०
आ मा पुष्टे च पोषे च रात्रि देवानां सुमतौ स्याम।
पूर्णा दर्वे परा पत सुपूर्णा पुनरा पत। सर्वान् यज्ञान्त्संभुञ्जतीषमूर्जं न आ भर ७
इडया जुह्वतो वयं देवान् घृतवता यजे। गृहानलुभ्यतो वयं सं विशेमोप गोमतः ११
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्।
तेन देवा व्यसहन्त शत्रून् हन्ता दस्यूनामभवच्छचीपतिः १२
इन्द्रपुत्रे सोमपुत्रे दुहितासि प्रजापतेः। कामानस्माकं पूरय प्रति गृह्णाहि नो हविः १३ ९१४

॥ १११ ॥ ( अथर्व० ३।१५।१-८ )

( पण्यकामः )। विश्वे देवाः, इन्द्राग्नी। त्रिष्टुप्, १ भुरिक्, ४ त्र्यवसाना षट्पदा बृहतीगर्भा विराडत्यष्टिः ५ विराड्जगती, ७ अनुष्टुप्, ८ निचृत्।

इन्द्रमहं वणिजं चोदयामि स न ऐतु पुरएता नो अस्तु।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् १ ९१५
ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि २
इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ३
इमामग्ने शरणिं मीमृषो नो यमध्वानमगाम दूरम्।
शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु।
इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च ४
येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः।
तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान् हविषा नि षेध ५
येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः।
तस्मिन् म इन्द्रो रुचिमा दधातु प्रजापतिः सविता सोमो अग्निः ६ ९१७
उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः। स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ७
विश्वाहा ते सदमिद् भरेमाश्वायेव तिष्ठते जातवेदः। ९१८
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ८

॥ १२२ ॥ ( अथर्व० ५।८।१-९ )×

नानादैवत्यं; १-२ अग्निः, ३ विश्वे देवाः, ४-९ इन्द्रः। अनुष्टुप्, २ त्र्यवसाना षट्पदा जगती, ३-४ भुरिक्पथ्यापङ्क्तिः, ६ आस्तारपङ्क्तिः, ७ द्व्युष्णिग्गर्भा पथ्यापङ्क्तिः, ९ त्र्यवसाना षट्पदा द्व्युष्णिग्गर्भा जगती।

...कृतेनेध्मेन देवेभ्य आज्यं वह। अग्ने ताँ इह मादय सर्व आ यन्तु मे हवम् १
...याहि मे हवमिदं करिष्यामि तच्छृणु।
...ऐन्द्रा अतिसरा आकूतिं सं नमन्तु मे। तेभिः शकेम वीर्यं१ जातवेदस्तनूवशिन् २
...मुतौ देवा अदेवः संश्चिकीर्षति।
...तस्याग्निर्हव्यं वाक्षीद्धवं देवा अस्य मोप गुर्ममैव हवमेतन ३ ९२५
...धावतातिसरा इन्द्रस्य वचसा हत।
...वृकं इव मश्नीत स वो जीवन्मा मोचि प्राणमस्यापि नह्यत ४
...अमी पुरोदधिरे ब्रह्माणमपभूतये। इन्द्र स ते अधस्पदं तं प्रत्यस्यामि मृत्यवे ५
...प्रथुर्देवपुरा ब्रह्म वर्माणि चक्रिरे।
...परिपाणं कृण्वाना यदुपोचिरे सर्वं तदरसं कृधि ६
...तिसरांश्चकार कृणवच्च यान्।
...तानिन्द्र वृत्रहन् प्रतीचः पुनरा कृधि यथामुं तृणहां जनम् ७
...उद्धाचनं लब्ध्वा चक्रे अधस्पदम्। कृण्वे३ऽहमधरांस्तथामूञ्छश्वतीभ्यः समाभ्यः ८ ९३०
...तानिन्द्र वृत्रहन्नुग्रो मर्माणि विध्य। अत्रैवैनानभि तिष्ठेन्द्र मेद्य१हं तव।
...त्वेन्द्रा रभामहे स्याम सुमतौ तव ९ ९३१

॥ १२३ ॥ ( अथर्व० ६।३।१-३ )

१ इन्द्रापूषणौ, अदितिः, मरुतः, अपां नपात्, सिन्धवः, विष्णुः, द्यौः; २ द्यावापृथिवी, ग्रावा, सोमः, सरस्वती, अग्निः; ३ अश्विनौ, उषासानक्ता, अपां नपात्, त्वष्टा। जगती, १ पथ्याबृहती।

पातं न इन्द्रापूषणादितिः पान्तु मरुतः।
अपां नपात् सिन्धवः सप्त पातन पातु नो विष्णुरुत द्यौः १
पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा पातु सोमो नो अंहसः।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः २
पातां नो देवाश्विना शुभस्पती उषासानक्तोत न उरुष्यताम्।
अपां नपादभिह्रुती गयस्य चिद् देव त्वष्टर्वर्धय सर्वतातये ३ ९३४

× अथर्व० ५,८,१-३ = दै० [ अग्निः ] ११६३-६५।

॥ १२४ ॥ ( अथर्व० ६।४।१-३ )+

१ त्वष्टा, पर्जन्यः, ब्रह्मणस्पतिः, अदितिः; २ अंशः, भगः, वरुणः, मित्रः, अर्यमा, अदितिः, मरुतः; ३ अश्विनौ, द्यौष्पिता । पथ्याबृहती, २ संस्तारपङ्क्तिः, ३ त्रिपदा विराड्गायत्री ।

त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः १ ९३५
अंशो भगो वरुणो मित्रो अर्यमादितिः पान्तु मरुतः ।
अप तस्य द्वेषो गमेदभिह्रुतो यावयच्छत्रुमन्तितम् २
धिये समश्विना प्रावतं न उरुष्या ण उरुज्मन्नप्रयुच्छन् । द्यौष्पितर्यावय दुच्छुना या ३

॥ १२५ ॥ ( अथर्व० ६।५।३ )

अग्निः, सोमः, ब्रह्मणस्पतिः । अनुष्टुप् ।

यस्य कृण्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ३ ९३८

॥ १२६ ॥ ( अथर्व० ६।४०।१-३ )

१ द्यावापृथिवी, सोमः, सविता, अन्तरिक्षं, सप्तऋषयः; २ सविता, इन्द्रः; ३ इन्द्रः ।
१-२ जगती, ३ अनुष्टुप् ।

अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ।
अभयं नोऽस्तूर्वन्तरिक्षं सप्तऋषीणां च हविषाऽभयं नो अस्तु १
अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु ।
अशत्र्विन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभि यातु मन्युः २ ९४०
अनमित्रं नो अधरादनमित्रं न उत्तरात् । इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ३ ९४१

॥ १२७ ॥ ( अथर्व० ६।६२।१-३ )

रुद्रः, वैश्वानरः, वातः, द्यावापृथिवी । त्रिष्टुप् ।

वैश्वानरो रश्मिभिर्नः पुनातु वातः प्राणेनेषिरो नभोभिः ।
द्यावापृथिवी पयसा पयस्वती ऋतावरी यज्ञिये नः पुनीताम् १
वैश्वानरीं सूनृतामा रभध्वं यस्या आशास्तन्वो वीतपृष्ठाः ।
तया गृणन्तः सधमादेषु वयं स्याम पतयो रयीणाम् २
वैश्वानरीं वर्चस आ रभध्वं शुद्धा भवन्तः शुचयः पावकाः ।
इहेडया सधमादं मदन्तो ज्योक् पश्येम सूर्यमुच्चरन्तम् ३ ९४४

॥ १२८ ॥ ( अथर्व० ६।६४।१-३ )

सांमनस्यम्, १ विश्वे देवाः । अनुष्टुप्, ( त्रिष्टुप् ) ।

सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे संजानाना उपासते १ ९४५

---

+ अथर्व० ६,४,१-२,३ = दै० [ अदितिः ] ७०४,८०८ । दै० [ अश्विनौ ] ६७३ ।

...नो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम् ।
...तेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम् २
...नी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ३ ९४७

॥ १२९ ॥ ( अथर्व० ६।६८।१-३ )

१ सविता, आदित्याः, रुद्राः; २ अदितिः, आपः, प्रजापतिः, ३ सविता, सोमः, वरुणः।
१ पुरोविराडतिशाक्करगर्भा चतुष्पदा जगती; २ अनुष्टुप्; ३ अतिजगतीगर्भा त्रिष्टुप्।

...यमगन्त्सविता क्षुरेणोष्णेन वाय उदकेनेहि ।
...दित्या रुद्रा वसव उन्दन्तु सचेतसः सोमस्य राज्ञो वपत प्रचेतसः १
...दितिः श्मश्रु वपत्वाप उन्दन्तु वर्चसा । चिकित्सतु प्रजापतिर्दीर्घायुत्वाय चक्षसे २
...वपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
...ब्रह्माणो वपतेदमस्य गोमानश्ववानयमस्तु प्रजावान् ३ ९५०

॥ १३० ॥ ( अथर्व० ६।७३।१-३ )

सांमनस्यम्, वरुणसोमाग्निबृहस्पतिवसवः ३ वास्तोष्पतिः। १,३ भुरिक्; २ त्रिष्टुप्।

एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु ।
अस्य श्रियमुपसंयात सर्व उग्रस्य चेत्तुः संमनसः सजाताः १
यो वः शुष्मो हृदयेष्वन्तराकूतिर्या वो मनसि प्रविष्टा ।
तान्सीवयामि हविषा घृतेन मयि सजाता रमतिर्वो अस्तु २
इहैव स्त माप याताध्यस्मत् पूषा परस्तादपथं वः कृणोतु ।
वास्तोष्पतिरनु वो जोहवीतु मयि सजाता रमतिर्वो अस्तु ३ ९५३

॥ १३१ ॥ (अथर्व० ६।७४।१-३ )

सांमनस्यम्, नाना देवताः, त्रिणामा। अनुष्टुप्, ३ त्रिष्टुप्।

...वः पृच्यन्तां तन्वः सं मनांसि समु व्रता। सं वोऽयं ब्रह्मणस्पतिर्भगः सं वो अजीगमत् १
...नं वो मनसोऽथो संज्ञपनं हृदः । अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि वः २ ९५५
...दित्या वसुभिः संबभूवुर्मरुद्भिरुग्रा अहृणीयमानाः ।
...त्रिणामन्नहृणीयमान इमान् जनान्त्संमनसस्कृधीह ३ ९५६

॥ १३२ ॥ ( अथर्व ६।९७।१,३ )

देवाः १ त्रिष्टुप्; ३ भुरिक्।

अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अभिभूरिन्द्रः ।
अभ्यहं विश्वाः पृतना यथासान्येवा विधेमाग्निहोत्रा इदं हविः १ ९५७

इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ×३ ९५८

॥ १३३ ॥ ( अथर्व० ६।९९।१-३ )

इन्द्रः, सोमः, सविता च । अनुष्टुप्, ३ भुरिग्बृहती ( सौम्या सावित्री ) ।

अभि त्वेन्द्र वरिमतः पुरा त्वांहूरणाद्धुवे । ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् १
यो अद्य सेन्यो वधो जिघांसन् न उदीरते । इन्द्रस्य तत्र बाहू समन्तं परि दद्मः २ ९६०
परि दद्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः। देव सवितः सोम राजन्त्सुमनसं मा कृणु स्वस्तये ३ ९६१

॥ १३४ ॥ ( अथर्व ७।७०।१-५ )

श्येनः, देवाः १ त्रिष्टुप्, २ अतिजगतीगर्भा जगती, ३-५ अनुष्टुप्
( ३ पुरःककुम्मती ) ।

यत् किं चासौ मनसा यच्च वाचा यज्ञैर्जुहोति हविषा यजुषा ।
तन्मृत्युना निर्ऋतिः संविदाना पुरा सत्यादाहुतिं हन्त्वस्य १
यातुधाना निर्ऋतिरादु रक्षस्ते अस्य घ्नन्त्वनृतेन सत्यम् ।
इन्द्रेषिता देवा आज्यमस्य मथ्नन्तु मा तत् सं पादि यदसौ जुहोति २
अजिराधिराजौ श्येनौ संपातिनाविव । आज्यं पृतन्यतो हतां यो नः कश्चाभ्यघायति ३
अपाञ्चौ त उभौ बाहू अपि नह्याम्यास्यम् । अग्नेर्देवस्य मन्युना तेन तेऽवधिषं हविः ४ ९६५
अपि नह्यामि ते बाहू अपि नह्याम्यास्यम् । अग्नेर्घोरस्य मन्युना तेन तेऽवधिषं हविः ५ ९६६

॥ १३५ ॥ ( अथर्व० ७।९८।१ )

इन्द्रः, विश्वे देवाः । विराट् ।

सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना सं मरुद्भिः ।
सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा १ ९६७

॥ १३५ ॥ ( अथर्व० १९।१५।५-६ )+

मन्त्रोक्ताः । ५ जगती; ६ त्रिष्टुप् ।

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ५
अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ६ ९६९

× अथर्व० ६,९७,२ = दै० [ अदितिः० ] ३०४ । + अथर्व० १९,१५,१ = दै० [ इन्द्रः ] ५६० ।

॥ १३७ ॥ ( अथर्व० १९।१६।१-२ )

मन्त्रोक्ताः । १ अनुष्टुप्; २ त्र्यवसाना सप्तपदा बृहतीगर्भातिशक्वरी ।

असपत्नं पुरस्तात् पश्चान्नो अभयं कृतम् । सविता मा दक्षिणत उत्तरान्मा शचीपतिः १ ९७०
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म २ ९७१

॥ १३८ ॥ ( अथर्व० १९।१७।१-१० )

मन्त्रोक्ताः । १-४ जगती; ५,७,१० अतिजगती; ६ भुरिक्; ९ पञ्चपदाऽतिशक्वरी ।

अग्निर्मा पातु वसुभिः पुरस्तात् तस्मिन् क्रमे तस्मिञ्छ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा १
वायुर्मान्तरिक्षेणैतस्या दिशः पातु तस्मिन् क्रमे० । स मा रक्षतु० २
सोमो मा रुद्रैर्दक्षिणाया दिशः पातु तस्मिन् क्रमे० । स मा रक्षतु० ३
वरुणो मादित्यैरेतस्या दिशः पातु तस्मिन् क्रमे० । स मा रक्षतु० ४ ९७५
सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः पातु० । स मा रक्षतु० ५
आपो मौषधीमतीरेतस्या दिशः पातु तासु क्रमे तासु श्रये तां पुरं प्रैमि ।
ता मा रक्षन्तु ता मा गोपायन्तु ताभ्य आत्मानं परि ददे स्वाहा ६
विश्वकर्मा मा सप्तऋषिभिरुदीच्या दिशः पातु तस्मिन् क्रमे० । सा मा रक्षतु० ७
इन्द्रो मा मरुत्वानेतस्या दिशः पातु तस्मिन् क्रमे० । स मा रक्षतु० ८
प्रजापतिर्मा प्रजननवान्त्सह प्रतिष्ठाया ध्रुवाया दिशः पातु० । स मा रक्षतु० ९ ९८०
बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिशः पातु तस्मिन् क्रमे० । स मा रक्षतु० १० ९८१

॥ १३९ ॥ ( अथर्व० १९।१८।१-१० )

मन्त्रोक्ताः । १,८ साम्नी त्रिष्टुप्; २-६ आर्च्यनुष्टुप्, ( ५ सम्राडार्च्यनुष्टुप् );
७,९-१० ( द्विपदा ) प्राजापत्या त्रिष्टुप् ।

अग्निं ते वसुवन्तमृच्छन्तु । ये माघायवः प्राच्या दिशोऽभिदासात् १
वायुं तेऽन्तरिक्षवन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् २
सोमं ते रुद्रवन्तमृच्छन्तु । ये माघायवो दक्षिणाया दिशोऽभिदासात् ३
वरुणं त आदित्यवन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ४ ९८५
सूर्यं ते द्यावापृथिवीवन्तमृच्छन्तु । ये माघायवः प्रतीच्या दिशोऽभिदासात् ५
अपस्त ओषधीमतीर्ऋच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ६ ९८७

विश्वकर्माणं ते सप्तऋषिवन्तमृच्छन्तु । ये माघायव उदीच्या दिशोऽभिदासात् ७
इन्द्रं ते मरुत्वन्तमृच्छन्तु । ये माघायव एतस्या दिशोऽभिदासात् ८
प्रजापतिं ते प्रजननवन्तमृच्छन्तु । ये माघायवो ध्रुवाया दिशोऽभिदासात् ९ ९९०
बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु । ये माघायव ऊर्ध्वाया दिशोऽभिदासात् १० ९९१

॥ १४० ॥ ( अथर्व० १९।१९।१-११ )

चन्द्रमाः, मन्त्रोक्ताश्च । पङ्क्तिः, १,३,९ भुरिग्बृहती; १० स्वराट्; २,४-८,११ अनुष्टुब्गर्भा ।

मित्रः पृथिव्योदक्रामत् तां पुरं प्र णयामि वः ।
तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु १
वायुरन्तरिक्षेणोदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० २
सूर्यो दिवोदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ३
चन्द्रमा नक्षत्रैरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ४ ९९५
सोम ओषधीभिरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ५
यज्ञो दक्षिणाभिरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ६
समुद्रो नदीभिरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ७
ब्रह्म ब्रह्मचारिभिरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ८
इन्द्रो वीर्येणोदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ९ १०००
देवा अमृतेनोदक्रामंस्तां पुरं प्र णयामि वः । तामा विशत० १०
प्रजापतिः प्रजाभिरुदक्रामत् तां पुरं प्र णयामि वः । तामा विशत० ११ १००१

॥ १४१ ॥ ( अथर्व० १९।२०।१-४ )

बहुदैवत्यम् । १ त्रिष्टुप्; २ जगती; ३ पुरस्ताद्बृहती; ४ अनुष्टुब्गर्भा ।

अप न्यधुः पौरुषेयं वधं यमिन्द्राग्नी धाता सविता बृहस्पतिः ।
सोमो राजा वरुणो अश्विना यमः पूषाऽस्मान् परि पातु मृत्योः १
यानि चकार भुवनस्य यस्पतिः प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि बहुलानि सन्तु २
यत् ते तनूष्वनह्यन्त देवा द्युराजयो देहिनः । इन्द्रो यच्चक्रे वर्म तदस्मान् पातु विश्वतः ३ १००५
वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः । वर्म मे विश्वे देवाः क्रन् मा मा प्रापत् प्रतीचिका ४ १००६

॥ १४२ ॥ ( अथर्व० १९।२३।१-२९ )

...त्रोक्ताः चन्द्रमाश्च । १ आसुरी गायत्री; २-७; २०,२३,२७ दैवी त्रिष्टुप्; ८,१०-१२,१४-१६ प्राजापत्या गायत्री, १७,१९,२४-२५,२९ दैवी पंक्तिः; ९,१३,१८,२१,२६,२८ दैवी जगती; ( १-२९ एकावसानाः ) ।

आथर्वणानां चतुर्ऋचेभ्यः स्वाहा १। पञ्चर्चेभ्यः स्वाहा २। षळृचेभ्यः स्वाहा ३
सप्तर्चेभ्यः स्वाहा ४। अष्टर्चेभ्यः स्वाहा ५। नवर्चेभ्यः स्वाहा ६
दशर्चेभ्यः स्वाहा ७। एकादशर्चेभ्यः स्वाहा ८
द्वादशर्चेभ्यः स्वाहा ९। त्रयोदशर्चेभ्यः स्वाहा १०। चतुर्दशर्चेभ्यः स्वाहा ११
पञ्चदशर्चेभ्यः स्वाहा १२। षोडशर्चेभ्यः स्वाहा १३। सप्तदशर्चेभ्यः स्वाहा १४ १०२०
अष्टादशर्चेभ्यः स्वाहा १५। एकोनविंशतिः स्वाहा १६। विंशतिः स्वाहा १७
महत्काण्डाय स्वाहा १८। तृचेभ्यः स्वाहा १९। एकर्चेभ्यः स्वाहा २०
क्षुद्रेभ्यः स्वाहा २१। एकानृचेभ्यः स्वाहा २२। रोहितेभ्यः स्वाहा २३
सूर्याभ्यां स्वाहा २४। व्रात्याभ्यां स्वाहा २५। प्राजापत्याभ्यां स्वाहा २६
विषासह्यै स्वाहा २७। मङ्गलिकेभ्यः स्वाहा २८। ब्रह्मणे स्वाहा २९ १०३५

॥ १४३ ॥ ( अथर्व० १९।२४।१-८ )

ब्रह्मणस्पतिः, बहुदैवत्यम् । अनुष्टुप्; ४-६,८ त्रिष्टुप्; ७ त्रिपदाऽऽर्षी गायत्री ।

येन देवं सवितारं परि देवा अधारयन् । तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन १
परीममिन्द्रमायुषे महे क्षत्राय धत्तन । यथैनं जरसे नयां ज्योक् क्षत्रेऽधि जागरत् २
परीमं सोममायुषे महे श्रोत्राय धत्तन । यथैनं जरसे नयां ज्योक् श्रोत्रेऽधि जागरत् ३
परि धत्त धत्त नो वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद् वास एतत् सोमाय राज्ञे परिधातवा उं ४
जरां सु गच्छ परि धत्स्व वासो भवा गृष्टीनामभिशस्तिपा उं ।
शतं च जीव शरदः पुरूची रायश्च पोषमुपसंव्ययस्व ५ १०४०
परीदं वासो अधिथाः स्वस्तयेऽभूर्वापीनामभिशस्तिपा उं ।
शतं च जीव शरदः पुरूचीर्वसूनि चारुर्वि भजासि जीवन् ६
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ७
हिरण्यवर्णो अजरः सुवीरो जरामृत्युः प्रजया सं विशस्व ।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ८ १०४३

॥ १४४ ॥ ( अथर्व० ५।३।३-६ )×

( १०४४-४७ ) बृहद्दिवोऽथर्वा । ३-४ देवाः, ५ द्रविणोदाः, ६ देवीः । त्रिष्टुप् ।

ममं देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामायास्मै ३
मह्यं यजन्तां मम यानीष्टाकूतिः सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्चनाहं विश्वे देवा अभि रक्षन्तु मेह ४ १०४५
मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैवा होतारः सनिषन्न एतदरिष्टाः स्याम तन्वा सुवीराः ५
दैवीः षडुर्वीरुरु नः कृणोत विश्वे देवास इह मादयध्वम् ।
मा नो विददभिभा मो अशस्तिर्मा नो विदद् वृजिना द्वेष्या या ६ १०४७

॥ १४५ ॥ ( अथर्व० १।१६।१-४ )

( १०४८-५१ ) चातनः । अग्निः, इन्द्रः, वरुणः, ( २-४ दधत्यं सीसम् ) । अनुष्टुप्, ४ ककुम्मती अनुष्टुप्।

येऽमावास्यांऽ रात्रिमुदस्थुर्व्राजमत्त्रिणः । अग्निस्तुरीयो यातुहा सो अस्मभ्यमधि ब्रवत् १
सीसायाध्याह वरुणः सीसायाग्निरुपावति । सीसं म इन्द्रः प्रायच्छत् तदङ्ग यातुचातनम् २
इदं विष्कन्धं सहत इदं बाधते अत्त्रिणः । अनेन विश्वा ससहे या जातानि पिशाच्याः ३ १०५०
यदि नो गां हंसि यद्यश्वं यदि पूरुषम् । तं त्वा सीसेन विध्यामो यथा नोऽसो अवीरहा ४ १०५१

॥ १४६ ॥ ( अथर्व० १।१९।१-४ )

( १०५२-९० ) ब्रह्मा । ईश्वरः, ( १ इन्द्रः, २ दैवीः मनुष्येषवः, ३ रुद्रः, ४ देवाः ) । अनुष्टुप्, २ पुरस्ताद्बृहती, ३ पथ्यापङ्क्तिः ।

मा नो विदन् विव्याधिनो मो अभिव्याधिनो विदन् ।
आराच्छरव्या अस्मद् विषूचीरिन्द्र पातय १
विष्वञ्चो अस्मच्छरवः पतन्तु ये अस्ता ये चास्याः ।
दैवीर्मनुष्येषवो ममामित्रान् वि विध्यत २
यो नः स्वो यो अरणः सजात उत निष्ट्यो यो अस्माँ अभिदासति ।
रुद्रः शरव्य यैतान् ममामित्रान् वि विध्यतु +३
यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति नः ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ४ १०५५

× अथर्व० ५,३,७,९-१० = दै० [ सोमः ] ११८७; दै० [ अदितिः० ] ७१०; दै० [ रुद्रः ] १५५ ।
+ अथर्व० १,१९,३ = दै० [ रुद्रः ] ११२ ।

॥ १४७ ॥ ( अथर्व० १।२६।१-२ )*

१ देवाः; २ इन्द्रः, भगः, सविता गायत्री; २ त्रिपदा एकावसाना साम्नी त्रिष्टुप्, ४ एकावसाना पादनिचृत् ।

आरे॒३ऽसाव॒स्मद॑स्तु हे॒तिर्दे॑वासो असत् । आ॒रे अश्मा॒ यमस्य॑थ १
सखा॒साव॒स्मभ्य॑मस्तु रा॒तिः सखेन्द्रो॒ भगः॑ सवि॒ता चि॒त्ररा॑धाः २ १०५७

॥ १४८ ॥ ( अथर्व० ३।२३।१-६ )

चन्द्रमाः, योनिः, द्यावापृथिवी । अनुष्टुप्, ५ उपरिष्टाद् भुरिग्बृहती, ६ स्कंधोग्रीवी बृहती ।

येन॑ वे॒हद् ब॒भूवि॑थ ना॒शया॑म॒सि तत् त्वत् । इ॒दं तद॒न्यत्र॒ त्वदप॑ दू॒रे नि द॑ध्मसि १
आ ते॒ योनिं॒ गर्भ॑ एतु पु॒मान् बाण॑ इवेषु॒धिम् ।
आ वी॒रोऽत्र॑ जायतां पु॒त्रस्ते॒ दश॑मास्यः २
पुमां॑सं पु॒त्रं ज॑नय॒ तं पु॒मान॑नु जायताम् ।
भवा॑सि पु॒त्राणां॑ मा॒ता जा॒तानां॑ ज॒नया॑श्च यान् ३ १०६०
यानि॑ भ॒द्राणि॒ बीजा॑न्यृष॒भा ज॒नय॑न्ति च । तैस्त्वं पु॒त्रं वि॑न्दस्व॒ सा प्र॒सूर्धेनु॑का भव ४
कृणोमि॑ ते प्राजाप॒त्यमा योनिं॒ गर्भ॑ एतु ते ।
वि॒न्दस्व॒ त्वं पु॒त्रं ना॑रि॒ यस्तुभ्यं॒ शम॒सच्छमु॒ तस्मै॒ त्वं भव॑ ५
यासां॒ द्यौः पि॒ता पृ॑थि॒वी मा॒ता स॑मु॒द्रो मूलं॑ वी॒रुधां॑ ब॒भूव॑ ।
तास्त्वा॑ पु॒त्रवि॑द्याय॒ दैवीः॒ प्राव॒न्त्वोष॑धयः ६ १०६३

॥ १४९ ॥ ( अथर्व० ६।५५।१ ) जगती ।

ये पन्था॑नो ब॒हवो॑ देव॒याना॑ अन्त॒रा द्यावा॑पृथि॒वी सं॒चर॑न्ति ।
तेषा॒मज्या॑निं यत॒मो वहा॑ति॒ तस्मै॑ मा देवाः॒ परि॑ धत्ते॒ह सर्वे॑ १ १०६४

॥ १५० ॥ ( अथर्व० ६।११४।१-३ ) अनुष्टुप् ।

यद् दे॒वा दे॑व॒हेड॑नं॒ देवा॑सश्चकृ॒मा व॒यम् । आदि॑त्या॒स्तस्मा॑न्नो यू॒यमृ॒तस्य॒र्तेन॑ मुञ्चत १ १०६५
ऋ॒तस्य॒र्तेना॑दित्या॒ यज॑त्रा मु॒ञ्चते॒ह नः॑ । य॒ज्ञं यद् य॑ज्ञवाहसः॒ शिक्ष॑न्तो॒ नोप॑शेकि॒म २
मे॒दस्व॑ता॒ यज॑मानाः स्रु॒चाज्या॑नि जु॒ह्वतः॑ । अ॒का॒मा वि॑श्वे वो देवाः॒ शिक्ष॑न्तो॒ नोप॑ शेकि॒म ३ १०६७

॥ १५१ ॥ ( अथर्व० ७।२४।१ )

इन्द्रः, अग्निः, विश्वे देवाः, मरुतः, सविता, प्रजापतिः, अनुमतिः । त्रिष्टुप् ।

यन्न॒ इन्द्रो॒ अख॑नद् यद॒ग्निर्विश्वे॑ दे॒वा म॒रुतो॒ यत् स्व॒र्काः ।
तद॒स्मभ्यं॑ सवि॒ता स॒त्यध॑र्मा प्र॒जाप॑तिरनु॑मति॒र्नि य॑च्छात् १ १०६८

* अथर्व० १,२६,३-४ = दै० [ मरुतः ] ४३०-३१।

॥ १५२ ॥ ( अथर्व० १९।९।१-१४ )

( शन्तातिः ? )। शान्तिः, बहुदैवत्यम्। अनुष्टुप्; १ विराडुरोबृहती; ५ पञ्चपदा पथ्यापंक्तिः, ९ पञ्चपदा ककुम्मती; १२ त्र्यवसाना सप्तपदाष्टिः, १४ चतुष्पदा संकृतिः।

शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्व१न्तरिक्षम्।
शान्ता उदन्वतीरापः शान्ता नः सन्त्वोषधीः १
शान्तानि पूर्वरूपाणि शान्तं नो अस्तु कृताकृतम्।
शान्तं भूतं च भव्यं च सर्वमेव शमस्तु नः २ १०७०
इयं या परमेष्ठिनी वाग्देवी ब्रह्मसंशिता। ययैव ससृजे घोरं तयैव शान्तिरस्तु नः ३
इदं यत् परमेष्ठिनं मनो वां ब्रह्मसंशितम्। येनैव ससृजे घोरं तेनैव शान्तिरस्तु नः ४
इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि मे हृदि ब्रह्मणा संशितानि।
यैरेव ससृजे घोरं तैरेव शान्तिरस्तु नः ५
शं नो मित्रः शं वरुणः शं विष्णुः शं प्रजापतिः।
शं न इन्द्रो बृहस्पतिः शं नो भवत्वर्यमा ६
शं नो मित्रः शं वरुणः शं विवस्वांछमन्तकः।
उत्पाताः पार्थिवान्तरिक्षाः शं नो दिविचरा ग्रहाः ७ १०७५
शं नो भूमिर्वेप्यमाना शमुल्का निर्हतं च यत्। शं गावो लोहितक्षीराः शं भूमिरव तीर्यतीः ८
नक्षत्रमुल्काभिहतं शमस्तु नः शं नोऽभिचाराः शमु सन्तु कृत्याः।
शं नो निखाता वल्गाः शमुल्का देशोपसर्गाः शमु नो भवन्तु ९
शं नो ग्रहाश्चान्द्रमसाः शमादित्यश्च राहुणा। शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः १०
शं रुद्राः शं वसवः शमादित्याः शमग्नयः। शं नो महर्षयो देवाः शं देवाः शं बृहस्पतिः ११
ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोऽग्नयः।
तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ब्रह्मा मे शर्म यच्छतु।
विश्वे मे देवाः शर्म यच्छन्तु सर्वे मे देवाः शर्म यच्छन्तु १२ १०८०
यानि कानि चिच्छान्तानि लोके सप्तऋषयो विदुः।
सर्वाणि शं भवन्तु मे शं मे अस्त्वभयं मे अस्तु १३
पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः
शान्तिर्विश्वे मे देवाः शान्तिः सर्वे मे देवाः शान्तिः शान्तिः शान्तिः शान्तिभिः।
ताभिः शान्तिभिः सर्वशान्तिभिः शमयामोऽहं यदिह घोरं यदिह क्रूरं
यदिह पापं तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः १४ १०८१

॥ १५३ ॥ ( अथर्व० १९।४३।१-८ )

ब्रह्म, बहुदैवत्यम्। त्र्यवसाना शंकुमती पथ्यापङ्क्तिः।

यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह।
अग्निर्मा तत्र नयत्वग्निर्मेधा दधातु मे। अग्नये स्वाहा　१
यत्र ब्रह्मविदो०। वायुर्मा तत्र नयतु वायुः प्राणान् दधातु मे। वायवे स्वाहा　२
यत्र ब्रह्मविदो०। सूर्यो मा तत्र नयतु चक्षुः सूर्यो दधातु मे। सूर्याय स्वाहा　३　१०८५
यत्र ब्रह्मविदो०। चन्द्रो मा तत्र नयतु मनश्चन्द्रो दधातु मे। चन्द्राय स्वाहा　४
यत्र ब्रह्मविदो०। सोमो मा तत्र नयतु पयः सोमो दधातु मे। सोमाय स्वाहा　५
यत्र ब्रह्मविदो०। इन्द्रो मा तत्र नयतु बलमिन्द्रो दधातु मे। इन्द्राय स्वाहा　६
यत्र ब्रह्मविदो०। आपो मा तत्र नयन्त्वमृतं मोप तिष्ठतु। अद्भ्यः स्वाहा　७
यत्र ब्रह्मविदो०। ब्रह्मा मा तत्र नयतु ब्रह्मा ब्रह्म दधातु मे। ब्रह्मणे स्वाहा　८　१०९०

॥ १५४ ॥ ( अथर्व० २।१२।१-८ )

( १०९१-९८ ) भरद्वाजः। १ द्यावापृथिवी, अन्तरिक्षम्, २ देवाः, ३ इन्द्रः, आदित्या-वसवोऽङ्गिरसः पितरः, ५ सोम्यासः पितरः, ६ मरुतः, ७ यमसादनम्, ब्रह्म, ८ अग्निः। त्रिष्टुप्, २ जगती, ७-८ अनुष्टुप्।

द्यावापृथिवी उर्वन्तरिक्षं क्षेत्रस्य पत्न्युरुगायोऽद्भुतः।
उतान्तरिक्षमुरु वातगोपं त इह तप्यन्तां मयि तप्यमाने　१
इदं देवाः शृणुत ये यज्ञिया स्थ भरद्वाजो मह्यमुक्थानि शंसति।
पाशे स बद्धो दुरिते नि युज्यतां यो अस्माकं मन इदं हिनस्ति　२
इदमिन्द्र शृणुहि सोमप यत् त्वा हृदा शोचता जोहवीमि।
वृश्चामि तं कुलिशेनेव वृक्षं यो अस्माकं मन इदं हिनस्ति　३
अशीतिभिस्तिसृभिः सामगेभिरादित्येभिर्वसुभिरङ्गिरोभिः।
इष्टापूर्तमवतु नः पितृणामामुं ददे हरसा दैव्येन　×४
द्यावापृथिवी अनु मा दीधीथां विश्वे देवासो अनु मा रभध्वम्।
अङ्गिरसः पितरः सोम्यासः पापमार्छत्वपकामस्य कर्ता　५　१०९५
अतीव यो मरुतो मन्यते नो ब्रह्म वा यो निन्दिषत् क्रियमाणम्।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषं द्यौरभिसंतपाति　६　१०९६

× अथर्व० २,१२,४ = दै० [ अदितिः० ] १६७।

सप्त प्राणानष्टौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा । अया यमस्य सादनमग्निदूतो अरंकृतः ७

आ दधामि ते पदं समिद्धे जातवेदसि । अग्निः शरीरं वेवेष्ट्वसुं वागपि गच्छतु ८ १०९८

॥ १५५ ॥ ( अथर्व० २।१२।३-५ )

( १०९९-११०१ ) शम्भुः । द्यावापृथिव्यादयो देवाः । त्रिष्टुप्, ५ भुरिक् ।

त्वमीशिषे पशूनां पार्थिवानां ये जाता उत वा ये जनित्राः ।
मेमं प्राणो हासीन्मो अपानो मेमं मित्रा वधिषुर्मो अमित्राः ३

द्यौष्ट्वा पिता पृथिवी माता जरामृत्युं कृणुतां संविदाने ।
यथा जीवा अदितेरुपस्थे प्राणापानाभ्यां गुपितः शतं हिमाः ४ ११००

इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुण मित्रराजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ५ ११०१

॥ १५६ ॥ ( अथर्व० २।३६।४,६,८ )+

( ११०२-४ ) पतिवेदनः । ४ इन्द्रः, ६ धनपतिः, ८ औषधिः । ४ त्रिष्टुप्, ६ अनुष्टुप्, ८ निचृत्पुरउष्णिक् ।

यथाखरो मघवंश्चारुरेष प्रियो मृगाणां सुषदा बभूव ।
एवा भगस्य जुष्टेयमस्तु नारी संप्रिया पत्याविराधयन्ती ४

आ क्रन्दय धनपते वरमामनसं कृणु । सर्वं प्रदक्षिणं कृणु यो वरः प्रतिकाम्यः ६

आ ते नयतु सविता नयतु पतिर्यः प्रतिकाम्यः । त्वमस्यै धेह्योषधे ८ ११०४

॥ १५७ ॥ ( अथर्व० ३।१९।१-८ )

( ११०५-१० ) वसिष्ठः । विश्वे देवाः, चन्द्रमाः, इन्द्रः । अनुष्टुप्, १ पथ्याबृहती, ३ भुरिग्बृहती, ५ त्रिष्टुप्, ६ त्र्यवसाना षट्पदा त्रिष्टुप्ककुम्मतीगर्भातिजगती, ७ विराडास्तारपङ्क्तिः, ८ पथ्यापङ्क्तिः ।

संशितं म इदं ब्रह्म संशितं वीर्यं१ बलम् ।
संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः १ ११०५

समहमेषां राष्ट्रं स्यामि समोजो वीर्यं१ बलम् ।
वृश्चामि शत्रूणां बाहूननेन हविषाहम् २

नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान् ।
क्षिणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ३

तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत ।
इन्द्रस्य वज्रात् तीक्ष्णीयांसो येषामस्मि पुरोहितः ४ ११०८

---

+ अथर्व० २,३६,१;३ = दै० [ अग्निः ] १३३९-४० । अथर्व० २,३६,२ = दै० [ सोमः० ] ११४३ । अथर्व० २,३६,५;७ = दै० [ अदितिः० ] ६२३,७९९ ।

एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्ण्वे३षां चित्तं विश्वेऽवन्तु देवाः ५
उद्धर्षन्तां मघवन् वाजिनान्युद् वीराणां जयतामेतु घोषः ।
पृथग् घोषा उलुलयः केतुमन्त उदीरताम् । देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ६ १११०
प्रेता जयता नर उग्रा वः सन्तु बाहवः ।
तीक्ष्णेषवोऽबलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः ७
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
जयामित्रान् प्र पद्यस्व जह्येषां वरंवरं मामीषां मोचि कश्चन ८ १११२

॥ १५८ ॥ ( अथर्व० ३।२२।१-६ )

वर्चः, बृहस्पतिः, विश्वे देवाः। अनुष्टुप्, १ विराट् त्रिष्टुप्, पञ्चपदा परानुष्टुप् विराडतिजगती,
४ त्र्यवसाना षट्पदा जगती।

हस्तिवर्चसं प्रथतां बृहद् यशो अदित्या यत् तन्वः संबभूव ।
तत् सर्वे समदुर्मह्यमेतद् विश्वे देवा अदितिः सजोषाः १
मित्रश्च वरुणश्चेन्द्रो रुद्रश्च चेततु । देवासो विश्वधायसस्ते माञ्जन्तु वर्चसा २
येन हस्ती वर्चसा संबभूव येन राजा मनुष्येष्वप्स्व१न्तः ।
येन देवा देवतामग्र आयन् तेन मामद्य वर्चसाग्ने वर्चस्विनं कृणु ३ १११५
यत् ते वर्चो जातवेदो बृहद् भवत्याहुतेः ।
यावत् सूर्यस्य वर्च आसुरस्य च हस्तिनः ।
तावन्मे अश्विना वर्च आ धत्तां पुष्करस्रजा ४
यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते ।
तावत् समैत्विन्द्रियं मयि तद्धस्तिवर्चसम् ५
हस्ती मृगाणां सुषदामतिष्ठावान् बभूव हि ।
तस्य भगेन वर्चसाभि षिञ्चामि मामहम् ६ १११८

॥ १५९ ॥ ( अथर्व० १९।११।५-६ )×

बहुदैवत्यम्। त्रिष्टुप्।

ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ५ १११९

× अथर्व० १९,११,१-४ = दै० [ विश्वे देवाः ] ४५९-६२।
११ दै. ( विश्वे देवाः )

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ६ ११२०

॥ १६० ॥ ( अथर्व० १९।२२।१-२१ )

( ११२१-४१ ) अङ्गिराः । मन्त्रोक्ताः । १ साम्न्युष्णिक्, ३,१९ प्राजापत्या गायत्री; ४,७,११,१७ दैवी जगती; ५,१२-१३ दैवी त्रिष्टुप्; २,६,१४-१६,२० दैवी पङ्क्तिः, ८-१० आसुरी जगती; १८ आसुर्यनुष्टुप्; २१ चतुष्पदा त्रिष्टुप् ( १-२० एकावसानाः ) ।

आङ्गिरसानामाद्यैः पञ्चानुवाकैः स्वाहा १ षष्ठाय स्वाहा २
सप्तमाष्टमाभ्यां स्वाहा ३ नीलनखेभ्यः स्वाहा ४
हरितेभ्यः स्वाहा ५ क्षुद्रेभ्यः स्वाहा ६
पर्यायिकेभ्यः स्वाहा ७ प्रथमेभ्यः स्वाहा ८
द्वितीयेभ्यः शङ्खेभ्यः स्वाहा ९ तृतीयेभ्यः शङ्खेभ्यः स्वाहा १० ११३०
उपोत्तमेभ्यः स्वाहा ११ उत्तमेभ्यः स्वाहा १२
उत्तरेभ्यः स्वाहा १३ ऋषिभ्यः स्वाहा १४
शिखिभ्यः स्वाहा १५ गणेभ्यः स्वाहा १६
महागणेभ्यः स्वाहा १७ सर्वेभ्योऽङ्गिरोभ्यो विदगणेभ्यः स्वाहा १८
पृथक्सहस्राभ्यां स्वाहा १९ ब्रह्मणे स्वाहा २० ११४०
ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्मा प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ×२१ ११४१

॥ १६१ ॥ ( अथर्व० ४।८।१-७ )

( ११४२-४९ ) अथर्वाङ्गिराः । चन्द्रमाः, आपः, राज्याभिषेकः, १ राजा, २ देवाः, ३ विश्वरूपः, ४-५ आपः । अनुष्टुप्; १,७ भुरिक्, त्रिष्टुप्, ३ त्रिष्टुप्, ५ विराट् प्रस्तारपङ्क्तिः ।

भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव ।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनु मन्यतामिदम् १
अभि प्रेहि माप वेन उग्रश्चेत्ता सपत्नहा ।
आ तिष्ठ मित्रवर्धन तुभ्यं देवा अधि ब्रुवन् २
आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियं वसानश्चरति स्वरोचिः ।
महत् तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ३ ११४४

× अथर्व० १९।२२।२१ = अथर्व० १९,२३,३०

व्याघ्रो अधि वैयाघ्रे वि क्रमस्व दिशो महीः ।
विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः ४ ११४५
या आपो दिव्याः पयसा मदन्त्यन्तरिक्ष उत वा पृथिव्याम् ।
तासां त्वा सर्वासामपामभि षिञ्चामि वर्चसा ५
अभि त्वा वर्चसासिचन्नापो दिव्याः पयस्वतीः ।
यथासो मित्रवर्धनस्तथा त्वा सविता करत् ६
एना व्याघ्रं परिषस्वजानाः सिंहं हिन्वन्ति महते सौभगाय ।
समुद्रं न सुभुवस्तस्थिवांसं मर्मृज्यन्ते द्वीपिनमप्स्व१न्तः ७ ११४८

॥ १६२ ॥ ( अथर्व० ७।११८।१ )

चन्द्रमाः, वरुणः, देवः । त्रिष्टुप् ।

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु १ ११४९

॥ १६३ ॥ ( अथर्व० ६।१२३।१-५ )

( ११५०-५४ ) भृगुः । त्रिष्टुप्, ३ द्विपदा साम्न्यनुष्टुप्, ४ एकावसाना द्विपदा प्राजापत्या भुरिगनुष्टुप् ।

एतं सधस्थाः परि वो ददामि यं शेवधिमावहाज्जातवेदाः ।
अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योमन् १ ११५०
जानीत स्मैनं परमे व्योमन् देवाः सधस्था विद लोकमत्र ।
अन्वागन्ता यजमानः स्वस्तीष्टापूर्तं स्म कृणुताविरस्मै २
देवाः पितरः पितरो देवाः । यो अस्मि सो अस्मि ३
स पचामि स ददामि स यजे स दत्तान्मा यूषम् ४
राजन् प्रति तिष्ठ तत्रैतत् प्रति तिष्ठतु । विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव ५ ११५४

॥ १६४ ॥ ( अथर्व० १९।२७।१-१५ )

( ११५५-६९ ) भृग्वङ्गिराः । त्रिवृत्, चन्द्रमाश्च । अनुष्टुप्; ३,९ त्रिष्टुप्; १० जगती ( ? ); ११ आर्च्युष्णिक्; १२ आर्च्यनुष्टुप्; १३ साम्नी त्रिष्टुप् ( ११-१३ एकावसानाः )

ष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः । वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः १
स्त्वा पात्वोषधीभिर्नक्षत्रैः पातु सूर्यः । माद्भ्यस्त्वा चन्द्रो वृत्रहा वातः प्राणेन रक्षतु २
दिवस्तिस्रः पृथिवीस्त्रीण्यन्तरिक्षाणि चतुरः समुद्रान् ।
स्तोमं त्रिवृत आप आहुस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः ३ ११५७

त्रीन्नाकांस्त्रीन्त्समुद्रांस्त्रीन् ब्रध्नांस्त्रीन् वैष्टपान् । त्रीन् मातरिश्वनस्त्रीन्त्सूर्यान् गोप्तॄन् कल्पयामि ते ४
घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन् । अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन् ५
मा वः प्राणं मा वोऽपानं मा हरो मायिनो दभन् । भ्राजन्तो विश्ववेदसो देवा दैव्येन धावत ६ ११६०
प्राणेनाग्निं सं सृजति वातः प्राणेन संहितः । प्राणेन विश्वतोमुखं सूर्यं देवा अजनयन् ७
आयुषाऽऽयुःकृतां जीवायुष्मान् जीव मा मृथाः । प्राणेनात्मन्वतां जीव मा मृत्योरुदगा वशम् ८
देवानां निहितं निधिं यमिन्द्रोऽन्वविन्दत् पथिभिर्देवयानैः ।
आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः ९
त्रयस्त्रिंशद् देवतास्त्रीणि च वीर्याणि प्रियायमाणा जुगुपुरप्स्व१न्तः ।
अस्मिश्चन्द्रे अधि यद्धिरण्यं तेनायं कृणवद् वीर्याणि १०
ये देवा दिव्येकादश स्थ ते देवासो हविरिदं जुषध्वम् ११ ११६५
ये देवा अन्तरिक्ष एकादश स्थ ते देवासो हविरिदं जुषध्वम् १२
ये देवाः पृथिव्यामेकादश स्थ ते देवासो हविरिदं जुषध्वम् १३
असपत्नं पुरस्तात् पश्चान्नो अभयं कृतम् । सविता मा दक्षिणत उत्तरान्मा शचीपतिः १४
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म १५ ११६९

॥ १६५ ॥ ( अथर्व० ६।१०।१-३ )

( ११७०-७८ ) शन्तातिः । १ पृथिवी, श्रोत्रं, वनस्पतिः, अग्निः, २ प्राणः, अन्तरिक्षं, वयः, वायुः, ३ द्यौः, चक्षुः, नक्षत्राणि, सूर्यः । द्वैपदम् , १ साम्नी त्रिष्टुप् , २ प्राजापत्या बृहती, ३ साम्नी बृहती ।

पृथिव्यै श्रोत्राय वनस्पतिभ्योऽग्नयेऽधिपतये स्वाहा १ ११७०
प्राणायान्तरिक्षाय वयोभ्यो वायवेऽधिपतये स्वाहा २
दिवे चक्षुषे नक्षत्रेभ्यः सूर्यायाधिपतये स्वाहा ३ ११७२

॥ १६६ ॥ ( अथर्व० ६।१९।१-३ )

चन्द्रमाः, १ देवजनाः, मनवः, विश्वा भूतानि, पवमानः, २ पवमानः, ३ सविता । गायत्री, १ अनुष्टुप् ।

पुनन्तु मा देवजनाः पुनन्तु मनवो धिया । पुनन्तु विश्वा भूतानि पवमानः पुनातु मा १
पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे । अथो अरिष्टतातये २
उभाभ्यां देव सवितः पवित्रेण सवेन च । अस्मान् पुनीहि चक्षसे ३ ११७५

॥ १६७ ॥ ( अथर्व० ६।९३।१-३ )

१ यमो मृत्युः शर्वः, २ भवः शर्वः, ३ विश्वे देवाः मरुतः अग्नीषोमौ वरुणः वातपर्जन्यौ । त्रिष्टुप् ।

यमो मृत्युरघमारो निर्ऋथो बभ्रुः शर्वोऽस्ता नीलशिखण्डः ।
देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परि वृञ्जन्तु वीरान् १
मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्यः कृणोम्यन्यत्रास्मदघविषा नयन्तु २
त्रायध्वं नो अघविषाभ्यो वधाद् विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ३ ११७८

॥ १६८ ॥ ( अथर्व० ६।५३।१-२ )×

(११७९-८० ) बृहच्छुक्रः । १ द्यौः, पृथिवी, शुक्रः, सोमः, अग्निः, वायुः, सविता, भगः, २ वैश्वानरः, १ जगती, २ त्रिष्टुप् ।

द्यौश्च म इदं पृथिवी च प्रचेतसौ शुक्रो बृहन् दक्षिणया पिपर्तु ।
अनु स्वधा चिकितां सोमो अग्निर्वायुर्नः पातु सविता भगश्च १
पुनः प्राणः पुनरात्मा न ऐतु पुनश्चक्षुः पुनरसुर्न ऐतु ।
वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठाति दुरितानि विश्वा २ ११८०

॥ १६९ ॥ ( अथर्व० ६।६३।१-३ )*

( ११८१-८३ ) द्रुह्वणः । १ निर्ऋतिः, २ यमः, ३ मृत्युः । जगती, २ अतिजगतीगर्भा ।

यत् ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविमोक्यं यत् ।
तत् ते वि ष्याम्यायुषे वर्चसे बलायादोमदमन्नमद्धि प्रसूतः १
नमोऽस्तु ते निर्ऋते तिग्मतेजोऽयस्मयान् वि चृता बन्धपाशान् ।
यमो मह्यं पुनरित् त्वां ददाति तस्मै यमाय नमो अस्तु मृत्यवे २
अयस्मये द्रुपदे बेधिष इहाभिहितो मृत्युभिर्ये सहस्रम् ।
यमेन त्वं पितृभिः संविदान उत्तमं नाकमधि रोहयेमम् ३ ११८३

॥ १७० ॥ ( अथर्व० ६।१०३।१-३ )

(११८४-८६ ) उच्छोचनः । इन्द्राग्नी; १ बृहस्पतिः सविता मित्रो अर्यमा भगो अश्विनौ; २-३ इन्द्रोऽग्निः; अनुष्टुप् ।

[सं]दानं वो बृहस्पतिः संदानं सविता करत् । संदानं मित्रो अर्यमा संदानं भगो अश्विना १
[सं] परमान्त्समवमानथो सं द्यामि मध्यमान् । इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् २ ११८५
[अमी] ये युधमायन्ति केतून् कृत्वानीकशः । इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ३ ११८६

× अथर्व० ६,५३,३ = दै० [ अदितिः० ] ७००। * अथर्व० ६,६३,४ = दै० [ अग्निः ] ७१६ ।

॥ १७१ ॥ ( अथर्व० ६।१२०।१-३ )

( ११८७-८९ ) कौशिकः । अन्तरिक्षं, पृथिवी, द्यौः, अग्निः । १ जगती, २ पङ्क्तिः, ३ त्रिष्टुप् ।

यदुन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अयं तस्माद् गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् १
भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः ।
द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा माव पत्सि लोकात् २
यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः ।
अश्लोणा अङ्गैरह्रुताः स्वर्गे तत्र पश्येम पितरौ च पुत्रान् ३ ११८९

॥ १७२ ॥ ( अथर्व० १४।२।५३-५८ )

( ११९०-९५ ) सूर्या सावित्री । अनुष्टुप् ।

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५३ ११९०
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । तेजो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५४
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । भगो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ५५
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । यशो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५६
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । पयो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५७
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ५८ ११९५

॥ १७३ ॥ [ ११९६-९८ ] ( अथर्व० २०।१२८।५ )

ये च देवा अयजन्ताथो ये च परादुदिः । सूर्यो दिवमिव गत्वाय मघवा नो वि रप्शते ५ ११९६

॥ १७४ ॥ ( अथर्व० २०।१३५।४,१० )

वी॒ मे देवा अक्रंसताध्वर्यो क्षिप्रं प्रचर । सुसत्यमिद् गवामस्यसि प्रखुदसि ४
देवा ददत्वासुरं तद् वो अस्तु सुचेतनम् । युष्माँ अस्तु दिवेदिवे प्रत्येव गृभायत १० ११९८

---

## देवाः ।

॥ १७५ ॥ ( ऋ० १।२७।१३ )

( ११९९ ) आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः । त्रिष्टुप् ।

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः १३ ११९९

॥ १७६ ॥ ( ऋ० १।४५।१० [ उत्तरार्धः ] ।
( १२०० ) प्रस्कण्वः काण्वः । ( सुदानवः देवाः ) । अनुष्टुप् ।

अयं सोमः सुदानव—स्तं पात तिरोअह्न्यम् १० १२००

॥ १७७ ॥ ( ऋ० १।९४।८ [ त्रयः पादाः ] )
( १२०१ ) कुत्स आङ्गिरसः । जगती ।

पूर्वो देवा भवतु सुन्वतो रथो ऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचः ८ १२०१

॥ १७८ ॥ ( ऋ० १।१६४।५० )
( १२०२ ) दीर्घतमा औचथ्यः । त्रिष्टुप् ।

यज्ञेन यज्ञमयजन्त देवा—स्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ५० १२०२

॥ १७९ ॥ ( ऋ० ७।१०४।११ )
( १२०३ ) मैत्रावरुणिर्वसिष्ठः । त्रिष्टुप् ।

परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ११ १२०३

॥ १८० ॥ ( ऋ० ८।६३।१२ )*
( १२०४ ) प्रगाथः काण्वः । त्रिष्टुप् ।

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः १२ १२०४

॥ १८१ ॥ ( ऋ० ८।८०।१० )
( १२०५ ) एकद्यूर्नौधसः । त्रिष्टुप् ।

अवीवृधद् वो अमृता अमन्दी—देकद्युर्देवा उत याश्च देवीः ।
तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् १० १२०५

॥ १८२ ॥ ( ऋ० १०।५१।२,४,६,८ )
( १२०६-११ ) सौचीकोऽग्निः । त्रिष्टुप् ।

को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।
क्वाह मित्रावरुणा क्षियन्त्य—ग्नेर्विश्वाः समिधो देवयानीः २
होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः ।
तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ४ १२०७

* वा० य० ३३,५० ।

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः ।
तस्माद्भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः ६
प्रयाजान् मे अनुयाजाँश्च केवला—नूर्जस्वन्तं हविषो दत्त भागम् ।
घृतं चापां पुरुषं चौषधीना—मग्नेश्च दीर्घमायुरस्तु देवाः ८ ११०९

॥ १८३ ॥ ( ऋ० १०।५३।४-५ )

तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ४ १११०
पञ्च जना मम होत्रं जुषन्तां गोजाता उत ये यज्ञियासः ।
पृथिवी नः पार्थिवात् पात्वंहसो ऽन्तरिक्षं दिव्यात् पात्वस्मान् ५ ११११

॥ १८४ ॥ ( ऋ० १०।७२।१-९ )

( १११२-२० ) बृहस्पतिर्लौक्यः, बृहस्पतिराङ्गिरसो वा, अदितिर्दाक्षायणी वा । अनुष्टुप् ।

देवानां नु वयं जाना प्र वोचाम विपन्यया । उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे १
ब्रह्मणस्पतिरेता सं कर्मार इवाधमत् । देवानां पूर्व्ये युगे ऽसतः सदजायत २
देवानां युगे प्रथमे ऽसतः सदजायत । तदाशा अन्वजायन्त तदुत्तानपदस्परि ३
भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त । अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ४ १११५
अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ५
यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत । अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ६
यद्देवा यतयो यथा भुवनान्यपिन्वत । अत्रा समुद्र आ गूळ्ह—मा सूर्यमजभर्तन ७
अष्टौ पुत्रासो अदिते—र्ये जातास्तन्व1स्परि । देवाँ उप प्रैत् सप्तभिः परा मार्ताण्डमास्यत् ८
सप्तभिः पुत्रैरदिति—रुप प्रैत् पूर्व्यं युगम् । प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत् ९ १११०

॥ १८५ ॥ ( ऋ० १०।८५।१७ )

( ११२१ ) सूर्या सावित्री ऋषिका । अनुष्टुप् ।

सूर्यायै देवेभ्यो मित्राय वरुणाय च । ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः १७ ११२१

॥ १८६ ॥ ( ऋ० १०।९८।१-१२ )

( ११२२-३३ ) देवापिरार्ष्टिषेणः ( वृष्टिकामः ) । त्रिष्टुप् ।

बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा । १ ११२२
आदित्यैर्वा यद्वसुभिर्मरुत्वा—न्त्स पर्जन्यं शंतनवे वृषाय

आ देवो दूतो अजिरश्चिकित्वान् त्वद्देवापे अभि मामगच्छत् ।
प्रतीचीनः प्रति मामा ववृत्स्व दधामि ते द्युमतीं वाचमासन् २
अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषिराम् ।
यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ३
आ नो द्रप्सा मधुमन्तो विशन्त्विन्द्र देह्यधिरथं सहस्रम् ।
नि षीद होत्रमृतुथा यजस्व देवान् देवापे हविषा सपर्य ४ १२२५
आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ५
अस्मिन्त्समुद्रे अध्युत्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन् ।
ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु ६
यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ७
यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे ।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम् ८
त्वां पूर्व ऋषयो गीर्भिरायन् त्वामध्वरेषु पुरुहूत विश्वे ।
सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ९ १२३०
एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।
तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि १०
एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इन्द्राय भागम् ।
विद्वान् पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ११
अग्ने बाधस्व वि मृधो वि दुर्गहाऽपामीवामप रक्षांसि सेध ।
अस्मात् समुद्राद् बृहतो दिवो नोऽपां भूमानमुप नः सृजेह १२ १२३३

॥ १८७ ॥ [ १२३४-६३ ] ( वा० य० १।८ )

देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ८ १२३४

॥ १८८ ॥ ( वा० य० २।७,२१ )

नमो देवेभ्यः ७ १२३५
देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः×२१ १२३६

× वा० य० ८,२१ = अथर्व० ७,९७,७-८।

११ [ दै० विश्वे देवाः ]

॥ १८९ ॥ ( वा० य० ६।११ )

स्वाहा देवेभ्यो देवेभ्यः स्वाहाः ११ ११३७

॥ १९० ॥ ( वा० य० ७।३,१२,१७,२२,२६ )

देवेभ्यस्त्वा मरीचिपेभ्यः ×३। देवास्त्वा शुक्रपाः प्रणयन्तु १२

देवास्त्वा मन्थिपाः प्रणयन्तु १७ ११४०

देवेभ्यस्त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामि २२। देवानामुत्क्रमणमसि २६ ११४१

॥ १९१ ॥ ( वा० य० ८।१८,२७,४३,६० )

सुगा वो देवाः सदना अकर्म य आजग्मेदꣳ सवनं जुषाणाः ।

भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा *१८

देवानाꣳ समिदसि २७

इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति ।

एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ४३ ११४५

देवान् दिवमगन् यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन् यज्ञस्ततो
मा द्रविणमष्टु पितॄन् पृथिवीमगन् यज्ञस्ततो मा द्रविणमष्टु यं कं च
लोकमगन् यज्ञस्ततो मे भद्रमभूत् ६० ११४६

॥ १९२ ॥ ( वा० य० ९।३५-३६ )

विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात् सद्भ्यः स्वाहा ३५

ये देवा विश्वदेवनेत्राः पश्चात् सदस्तेभ्यः स्वाहा ३६ ११४८

॥ १९३ ॥ ( वा० य० १५।५० )

तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।

नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ५० ११४९

॥ १९४ ॥ ( वा० य० १७।५६ )

दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः ।

परिगृह्य देवा यज्ञमायन् देवा देवेभ्यो अध्वर्यन्तो अस्थुः ५६ ११५०

॥ १९५ ॥ ( वा० य० १८।६० )

एतं जानाथ परमे व्योमन् देवाः सधस्था विद रूपमस्य ।

यदागच्छात् पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरस्मै ६० ११५१

× वा० य० ७,६। * दै० [ इन्द्रः ] ३१२३।

॥ १९६ ॥ ( वा० य० १९।१२ )
देवा यज्ञमतन्वत भेषजं भिषजाश्विना । वाचा सरस्वती भिषगिन्द्रायेन्द्रियाणि दधतः १२ ११५२

॥ १९७ ॥ ( वा० य० २०।१४ )
यद् देवा देवहेडनं देवासश्चकृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः १४ ११५३

॥ १९८ ॥ ( वा० य० २१।५३ )
देवा देवानां भिषजा होताराविन्द्रमश्विना ।
वषट्कारैः सरस्वती त्विषिं न हृदये मतिꣳ होतृभ्यां दधुरिन्द्रियं वसुवने
वसुधेयस्य व्यन्तु यज ५३ ११५४

॥ १९९ ॥ ( वा० य० २६।१९ )
अनु वीरैरनु पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः ।
अनु द्विपदानु चतुष्पदा वयं देवा नो यज्ञमृतुथा नयन्तु १९ ११५५

॥ २०० ॥ ( वा० य० २८।११ )
देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु ११ ११५६

॥ २०१ ॥ ( वा० य० २९।२० )
देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत् २० ११५७

॥ २०२ ॥ ( वा० य० ३१।१४-१५,२१ )
यत् पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः १४
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् १५
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात् तस्य देवा असन् वशे २१ ११६०

॥ २०३ ॥ ( वा० य० ३३।७,४८,८९ )
त्रीणि शता त्री सहस्राण्यग्निं त्रिꣳशच्च देवा नव चासपर्यन् ।
औक्षन् घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ७
अग्न इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ४८
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ८९ ११६३

*

## लिङ्गोक्ताः ।

॥ २०४ ॥ ( ऋ० १।१३६।६-७ )

( ११६४-६५ ) परुच्छेपो दैवोदासिः । ६ अत्यष्टिः, ७ त्रिष्टुप् ।

नमो॑ दि॒वे बृ॑ह॒ते रोद॑सीभ्यां मि॒त्राय॑ वोचं॒ वरु॑णाय मी॒ळ्हुषे॑ सुमृळी॒काय॑ मी॒ळ्हुषे॑ ।
इन्द्र॑म॒ग्निमुप॑ स्तुहि द्यु॒क्षम॑र्य॒मणं॒ भग॑म् ।
ज्योग्जीव॑न्तः प्र॒जया॑ सचेमहि॒ सोम॑स्यो॒ती स॑चेमहि ६
ऊ॒ती दे॒वानां॑ व॒यमिन्द्र॑वन्तो मं॒सीम॑हि॒ स्वय॑शसो म॒रुद्भिः॑ ।
अ॒ग्निर्मि॒त्रो वरु॑णः॒ शर्म॑ यंस॒न् तद॑श्याम म॒घवा॑नो व॒यं च॑ ७ ११६५

॥ २०५ ॥ ( ऋ० २।३२।८ )

( ११६६ ) गृत्समदः ( आङ्गिरसः शौनहोत्रः पश्चाद् ) भार्गवः शौनकः । अनुष्टुप् ।

या गु॒ङ्गूर्या सि॑नीवा॒ली या रा॒का या सर॑स्वती ।
इ॒न्द्रा॒णीम॑ह्व ऊ॒तये॑ वरुणा॒नीं स्व॒स्तये॑ ८ ११६६

॥ २०६ ॥ ( ऋ० १०।१४।७-९ )

( ११६७-६९ ) वैवस्वतो यमः । ( पितरो वा ) । त्रिष्टुप् ।

प्रेहि॒ प्रेहि॑ प॒थिभिः॑ पू॒र्व्येभि॒र्यत्रा॑ नः॒ पूर्वे॑ पि॒तरः॑ परे॒युः ।
उ॒भा राजा॑ना स्व॒धया॒ मद॑न्ता य॒मं प॑श्यासि॒ वरु॑णं च दे॒वम् ७
सं ग॑च्छस्व पि॒तृभिः॒ सं य॒मेने॑ष्टापू॒र्तेन॑ पर॒मे व्यो॑मन् ।
हि॒त्वाया॑व॒द्यं पुन॒रस्त॒मेहि॒ सं ग॑च्छस्व त॒न्वा॑ सु॒वर्चाः॑ ८
अपे॑त॒ वी॑त॒ वि च॑ सर्प॒तातो॒ऽस्मा ए॒तं पि॒तरो॑ लो॒कम॑क्रन् ।
अहो॑भिर॒द्भिर॒क्तुभि॒र्व्य॑क्तं य॒मो द॑दात्यव॒सान॑मस्मै ९ ११६९

॥ २०७ ॥ [ १२७०-१३९३ ] ( वा० य० १।१२,१४ )

प॒वित्रे॑ स्थो वैष्ण॒व्यौ॑ सवि॒तुर्वः॑ प्रस॒वः उत्पु॑ना॒म्यच्छि॑द्रेण प॒वित्रे॑ण॒ सूर्य॑स्य र॒श्मिभिः॑ ।
दे॒वी॑रापो अग्रेगुवो अग्रेपुवोऽग्र॑ इ॒मम॒द्य य॒ज्ञं न॑यता॒ग्रे य॒ज्ञप॑तिꣳ सु॒धातुं॑ य॒ज्ञप॑तिं
दे॒व॒युव॑म् १२ १२७०
शर्मा॒स्यव॑धूत॒ꣳ रक्षोऽव॑धूता॒ अरा॑तयो॒ऽदित्या॒स्त्वग॑सि॒ प्रति॒ त्वादि॑तिर्वेत्तु ।
अद्रि॑रसि वानस्प॒त्यो ग्रावा॑सि पृ॒थुबु॑ध्नः॒ प्रति॒ त्वादि॑त्या॒स्त्वग्वे॑त्तु १४ १२७१

॥ २०८ ॥ ( वा० य० २।२,५,१५,२०,२२,३२ )

कृ॒ष्णो॒ऽस्याख॑रे॒ष्ठो॒ऽग्नये॑ त्वा॒ जुष्टं॒ प्रोक्षा॑मि॒ वेदि॑रसि ब॒र्हिषे॑ त्वा॒ जुष्टां॒ प्रोक्षा॑मि
ब॒र्हिर॑सि स्रु॒ग्भ्यस्त्वा॒ जुष्टं॒ प्रोक्षा॑मि १ १२७२

समिदसि सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै ।
सवितुर्बाहू स्थ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य आ त्वा वसवो रुद्रा आदित्याः सदन्तु ५
अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ।
अग्नीषोमौ तमपनुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ।
इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां० १५
अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि
दुरद्मन्या अविषं नः पितुं कृणु ।
सुषदा योनौ स्वाहा वाडग्नये संवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा २० ११७५
सं बर्हिरङ्क्ताᳬ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः ।
समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा २२
नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वास आधत्त ३२ ११७७

॥ २०९ ॥ ( वा० य० २।५,९-१० )

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ५
अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ९
सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा ॥
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा १० ११८०

॥ २१० ॥ ( वा० य० ३।७,२६ )

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा ।
आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष ।
बृहस्पतये हविषा विधेम स्वाहा ७ ११८१

शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन ।
सग्मे ते गोरस्मे ते चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे
सहस्रपोषं पुषेयम् २६ ११८१

॥ १११ ॥ ( वा० य० ५।१,७,९ )

अग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा असि ।
गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा
छन्दसा मन्थामि २
अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ।
आप्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ।
एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ७
तप्तायनी मेऽसि वित्तायनी मेऽस्यवतान्मा नाथितादवतान्मा व्यथितात् ।
विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि योऽस्यां पृथिव्यामसि
यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना
नाम्नेहि यो द्वितीयस्यां पृथिव्यामसि यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वा
दधे विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि यस्तृतीयस्यां
पृथिव्यामसि यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे ।
अनु त्वा देववीतये ९ ११८५

॥ २१२ ॥ ( वा० य० ६।७,९,१५-१६,१८,२०-२१,१३,२६ )

उपावीरस्युप देवान् दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ७
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नीषोमाभ्यां जुष्टं नियुनज्मि ।
अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।
अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ९
मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायताꣳ
श्रोत्रं त आप्यायताम् ।
यत् ते क्रूरं यदास्थितं तत् त आप्यायतां निष्ट्यायतां तत् ते शुध्यतु शमहोभ्यः ।
१५ ११८८
ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः

रक्षसां भागोऽसि निरस्तथं रक्ष इदमहथं रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाध इदमहथं रक्षोऽधमं तमो नयामि ।

१२८९ घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् १६

सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् ।

रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन् वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या ऊष्मणो व्यथिषत् प्रयुतं द्वेषः १८ १२९०

ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः १

देव त्वष्टर्भूरि ते सथं समेतु सलक्ष्मा यद्विषुरूपं भवाति ।

देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु २०

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दांथंसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहा मनो मे हार्दि यच्छ दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा २१

हविष्मतीरिमा आपो हविष्माँ२ आविवासति ।

१२८५ हविष्मान् देवो अध्वरो हविष्माँ२ अस्तु सूर्यः २३

सोम राजन् विश्वास्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोहन्तु ।

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।

श्रोता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवः सविता हवं मे स्वाहा २६ १२९४

॥ २१३ ॥ ( वा० य० ७।२-३,१५,१८,२०,२२,२३,२७-२८,४५-४७ )+

मधुमतीर्न इषस्कृधि यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि २ १२९५

स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवांथंशो यस्मै त्वेडे तत्

१२८८ सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ३ १२९६

+वा० य० ७,३९-१० = दै० [ इन्द्रः ] १८७१,२४३ ।

स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा ।
तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत् स्वाहायाडग्नीत् १५ ११९७
सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् ।
सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को मन्थिनोऽधिष्ठानमसि १८
उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः ।
पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु त्वं पाह्यभि सवनानि पाहि २०
उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाव्यं गृह्णामि
यत् त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा
देवाव्यं यज्ञस्याऽऽयुषे गृह्णामि २२ १३००
मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामीन्द्राय त्वा देवाव्यं यज्ञस्याऽऽयुषे
गृह्णामीन्द्राग्निभ्यां त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामीन्द्रावरुणाभ्यां त्वा देवाव्यं
यज्ञस्याऽऽयुषे गृह्णामीन्द्राबृहस्पतिभ्यां त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामीन्द्रा-
विष्णुभ्यां त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णामि २३
प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्वोदानाय मे
वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे पवस्व क्रतूदक्षाभ्यां मे वर्चोदा
वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्यां मे वर्चोदसौ
वर्चसे पवेथाम् २७
आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वाऽऽयुषे मे वर्चोदा
वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् २८
रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु ।
ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ४५
ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ।
असद्राता देवत्रा गच्छत प्रदातारमाविशत ४६ १३०५
अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयाऽऽयुर्दात्र एधि मयो मह्यं प्रतिग्र-
हीत्रे रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्र एधि
वयो मह्यं प्रतिग्रहीत्रे बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय
त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे यमाय त्वा मह्यं वरुणो ददातु
सोऽमृतत्वमशीय हयो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे ४७ १३०६

॥ २१४ ॥ ( वा० य० ८।९,५४-५९ )

१२९७ उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त इन्दोरिन्द्रियावतः पत्नीवतो
ग्रहाँ२ ऋध्यासम् ।
अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् ।
अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ९
परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः ।
सविता सन्यां विश्वकर्मा दीक्षायां पूषा सोमक्रयण्याम् ५४
इन्द्रश्च मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट
१३०० उरावासन्नो विष्णुर्नरन्धिषः ५५
प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नोऽग्निराग्नीध्र इन्द्रो हविर्धानेऽथर्वोपावह्रियमाणः ५६ १३१०
विश्वे देवा अꣳशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो
विष्णुः सम्भ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी
सक्तुश्रीः ५७
विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः
प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशꣳसाः ५८
सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा
स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ +५९ १३१३

॥ २१५ ॥ ( वा० य० ९।९-११,२४,३१-३६ )

जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते ।
तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुः ।
१३०५ वाजिनो वाजजितो वाजꣳ सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत ९
देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳ रुहेयम् ।
देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयम् ।
देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् ।
१३०६ देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् १० १३१५

+ वा० य० ८।६० = दै० [ विश्वे देवाः ] १२४६ । * अथर्व० ६,९२,२ पाठभेदेन ।
१३ [ दै० विश्वे देवाः ]

बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयत ।
इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ११
एषा वः सा सत्या संवाग्भूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं
वनस्पतयो विमुच्यध्वम् ।
एषा वः सा सत्या संवाग्भूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं० १२
वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्ववीरं नियच्छतु स्वाहा २४
अग्निरेकाक्षरेण प्राणमुदजयत् तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतां
तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत् तानुज्जेषꣳ सोमश्चतुरक्षरेण
चतुष्पदः पशूनुदजयत् तानुज्जेषम् ३१
पूषा पञ्चाक्षरेण पञ्च दिश उदजयत् ता उज्जेषꣳ सविता षडक्षरेण षडृतूनुद-
जयत् तानुज्जेषं मरुतः सप्ताक्षरेण सप्त ग्राम्यान् पशूनुदजयँस्तानुज्जेषं
बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत् तामुज्जेषम् ३२ १३१०
मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् तमुज्जेषं वरुणो दशाक्षरेण विराजमुद-
जयत् तामुज्जेषमिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत् तामुज्जेषं विश्वे देवा
द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ३३
वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयँस्तमुज्जेषꣳ रुद्राश्चतुर्दशाक्षरेण
चतुर्दशꣳ स्तोममुदजयँस्तमुज्जेषमादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ
स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्
तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् तमुज्जेषम् ३४
एष ते निर्ऋते भागस्तं जुषस्व स्वाहाऽग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा
यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चा-
त्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः
स्वाहा सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ३५
ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः
स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रा-
वरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा
उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ३६ १३१४

॥ २१६ ॥ ( वा० य० १०।५,९,२१,२३,२८,३१ )

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ।
अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा
बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाऽꣳशाय स्वाहा
भगाय स्वाहाऽर्यम्णे स्वाहा ५ १३२५
आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आवित्तौ मित्रावरुणौ
धृतव्रतावावित्तः पूषा विश्ववेदा आवित्ते द्यावापृथिवी विश्वशम्भुवावा-
वित्तादितिरुरुशर्मा ९
इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि ।
अव्यथायै त्वा स्वधायै त्वाऽरिष्टो अर्जुनो मरुतां प्रसवेन जयापाम मनसा
समिन्द्रियेण २१
अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा मरुतामोजसे स्वाहेन्द्रस्ये-
न्द्रियाय स्वाहा ।
पृथिवि मातर्मा मा हिꣳसीर्मो अहं त्वाम् २३
अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तां ब्रह्मँस्त्वं ब्रह्माऽसि सविताऽसि सत्यप्रसवो
वरुणोऽसि सत्यौजा इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः ।
बहुकार श्रेयस्कर भूयस्करेन्द्रस्य वज्रोऽसि तेन मे रध्य २८
अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ।
वायुः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ३१ १३३०

॥ २१७ ॥ ( वा० य० ११।५८,६६ )

वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि
प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय रुद्रास्त्वा
कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ
रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानायादित्यास्त्वा कृण्वन्तु
जागतेन छन्दसाङ्गिरस्वद् ध्रुवासि द्यौरसि धारया मयि प्रजाꣳ रायस्पोषं
गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय विश्वे त्वा देवा वैश्वानराः
कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवासि दिशोऽसि धारया मयि प्रजाꣳ
रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय ५८ १३३१

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं
प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजापतये मनवे
स्वाहाऽग्नये वैश्वानराय स्वाहा ६६ १३३२

॥ २१८ ॥ ( वा० य० १२।४५,५४,७४ )

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ४५
लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् ५४
सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः ।
सजोषसावश्विना दꣳसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इडया घृतेन स्वाहा ७४ १३३५

॥ २१९ ॥ ( वा० य० १३।२,३८ )

अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ२ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व २
सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ३८ १३३७

॥ २२० ॥ ( वा० य० १४।९-१०,१७-१९,२३-२६ )

मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधि-
पतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो बस्तो वयो विबलं छन्दो
वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं
छन्दः सिꣳहो वयश्छदिश्छन्दः पष्ठवाड् वयो बृहती छन्द उक्षा वयः
ककुप् छन्द ऋषभो वयः सतोबृहती छन्दः ९
अनड्वान् वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दस्त्र्यविर्वयस्त्रिष्टुप् छन्दो
दित्यवाड् वयो विराट् छन्दः पञ्चाविर्वयो गायत्री छन्दस्त्रिवत्सो वय उष्णिक्
छन्दस्तुर्यवाड् वयोऽनुष्टुप् छन्दो लोकं ता इन्द्रम् १०
आयुर्मे पाहि प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे
पाहि वाचं मे पिन्व मनो मे जिन्वाऽऽत्मानं मे पाहि ज्योतिर्मे यच्छ १७ १३४०
मा छन्दः प्रमा छन्दः प्रतिमा छन्दो अस्रीवयश्छन्दः पङ्क्तिश्छन्द उष्णिक्
छन्दो बृहती छन्दोऽनुष्टुप् छन्दो विराट् छन्दो गायत्री छन्दस्त्रिष्टुप्
छन्दो जगती छन्दः १८ १३४१

पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणि छन्दो वाक्
छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दोऽजाश्छन्दोऽश्वश्छन्दः १९
१३३२ आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशो धरुणं एकविंशः प्रतूर्तिरष्टादश-
स्तपो नवदशोऽभीवर्त्तः सविंशो वर्चो द्वाविंशः सम्भरणस्त्रयोविंशो
योनिश्चतुर्विंशो गर्भाः पञ्चविंश ओजस्त्रिणवः क्रतुरेकत्रिंशः प्रतिष्ठा
त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशो नाकः षट्त्रिंशो विवर्त्तोऽष्टाच-
त्वारिंशो धर्त्रं चतुष्टोमः २३
अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इन्द्रस्य भागोऽसि
विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदश स्तोमो नृचक्षसां भागोऽसि धातुराधि-
१३३५ पत्यं जनित्रं स्पृतं सप्तदश स्तोमो मित्रस्य भागोऽसि वरुणस्याधिपत्यं
दिवो वृष्टिर्वात स्पृत एकविंश स्तोमः २४
वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विंश स्तोमं आदित्यानां
भागोऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविंश स्तोमोऽदित्यै भागोऽसि
१३३७ पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमो देवस्य सवितुर्भागोऽसि
बृहस्पतेराधिपत्यं समीचीर्दिश स्पृताश्चतुष्टोम स्तोमः २५ १३४५
यवानां भागोऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिंश स्तोमं ऋभूणां
भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं स्पृतं त्रयस्त्रिंश स्तोमः २६ १३४६

॥ २२१ ॥ ( वा० य० १५।३-१९ )

षोडशी स्तोम ओजो द्रविणं चतुश्चत्वारिंश स्तोमो वर्चो द्रविणम् ।
अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ३
एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो
व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिरं छन्दः ककुप्छन्दस्त्रिककुप्छन्दः
काव्यं छन्दो अङ्कुपं छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारप-
१३४० ङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः ४
आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो
१३४१ निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः संस्तुप्छन्दोऽनुष्टु-
प्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्धाश्छन्दो
विशालं छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दो अङ्काङ्कं छन्दः ५ १३४९

रश्मिना सत्याय सत्यं जिन्व प्रेतिना धर्मना धर्मं जिन्वान्वित्या दिवा दिवं
जिन्व सन्धिनान्तरिक्षेणान्तरिक्षं जिन्व प्रतिधिना पृथिव्या पृथिवीं जिन्व
विष्टम्भेन वृष्ट्या वृष्टिं जिन्व प्रवयाह्नाहर्जिन्वानुया रात्र्या रात्रीं जिन्वोशिजा
वसुभ्यो वसूञ्जिन्व प्रकेतेनादित्येभ्य आदित्याञ्जिन्व ६ १३५०

तन्तुना रायस्पोषेण रायस्पोषं जिन्व सꣳसर्पेण श्रुताय श्रुतं जिन्वैडेनौषधी-
भिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व वयोधसाधीतेनाधीतं जिन्वाभिजिता
तेजसा तेजो जिन्व ७

प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि
तेजसे त्वा ८

त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते
त्वाक्रमोऽस्याक्रमाय त्वा संक्रमोऽसि संक्रमाय त्वोत्क्रमोऽस्युत्क्रमाय
त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वाधिपतिनोर्जोर्जं जिन्व ९

राज्ञ्यसि प्राची दिग् वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्
त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु रथन्तरꣳ
साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया
वरिम्णा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य
पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु १०

विराडसि दक्षिणा दिग् रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता
पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्र उगमुक्थमव्यथायै स्तभ्नातु
बृहत्साम प्रतिष्ठित्या० ११ १३५५

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्ता
सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु
वैरूपꣳ साम प्रतिष्ठित्या० १२

स्वराडस्युदीची दिङ्मरुतस्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्तैकविꣳ-
शस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु
वैराजꣳ साम प्रतिष्ठित्या० १३ १३५७

अधिपत्न्यसि बृहती दिग् विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता
त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे
अव्यथायै स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्या० १४
१३५० अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ।
पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः
प्रहेतिस्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च
नो द्वेष्टि तमेषां जम्भे दध्मः १५
अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ ।
मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेतिस्तेभ्यो० १६ १३६०
अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ ।
प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिस्तेभ्यो० १७
अयमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ ।
विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो नमो अस्तु० १८
अयमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ ।
उर्वशी च पूर्वचित्तिश्चाप्सरसाववस्फूर्जन् हेतिर्विद्युत् प्रहेतिस्तेभ्यो नमो अस्तु० १९ १३६३

॥ २२२ ॥ ( वा० य० १७।४८,५२ )+

यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ।
तन्न इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ४८
यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम् । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ५२ १३६५

॥ २२३ ॥ ( वा० य० १८।३७ )

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ३७ १३६६

॥ २२४ ॥ ( वा० य० २०।३,१३,१७-१८ )

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभि षिञ्चामि सरस्वत्यै भैषज्येन वीर्याया-
न्नाद्यायाभि षिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभि षिञ्चामि ३ १३६७

+ वा० य० १७,४९ = ऋ० ६,७५,१८; दै० [ विश्वे देवाः ] ११४३, सा० १८७०।

लोमानि प्रयतिर्मम त्वङ् म आनतिरागतिः ।
मा१ंसं म उपनतिर्वस्वस्थि मज्जा म आनतिः १६
यद् ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि १७
यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ।
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि १८ १३७०

॥ २२५ ॥ ( वा० य० २१।४१-४३,६०-६१ ) ×

होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेता१ं हविर्होतर्यज ।
होता यक्षत् सरस्वतीं मेषस्य वपाया मेदसो जुषता१ं हविर्होतर्यज ।
होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुषता१ं हविर्होतर्यज ४१
होता यक्षदश्विनौ सरस्वतीमिन्द्र१ं सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न
मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः
शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः
सुत्रामा वृत्रहा जुषन्ता१ं सोम्यं मधु पिबन्तु मदन्तु व्यन्तु होतर्यज ४२
होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः
पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमाना१ं सुमत्क्षराणा१ं
शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत
उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेता१ं हविर्होतर्यज ४३
सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्यां छागेन सरस्वत्यै मेषेणेन्द्राय
ऋषभेणाक्षँस्तान् मेदस्तः प्रति पचतागृभीषतावीवृधन्त पुरोडाशैरपुरश्विना
सरस्वतीन्द्रः सुत्रामा सुरासोमान् ६०
त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ सङ्गतेभ्य
एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देव दानान्यदुस्तान्यस्मा
आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः
सूक्तवाकाय सूक्ता ब्रूहि ६१ १३७५

× वा० य० २१,१३-१८ = दै० [ अदितिः० ] ९४०-९४५ ।

॥ २२६ ॥ ( वा० य० २३।८,१३,१८-२०,२६-२७,६३ )

वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वाञ्जन्तु जागतेन छन्दसा ।

भूर्भुवः स्वर्लाजी३ञ्छाची३न्यव्ये गव्य एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ८

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शल्मलिर्वृद्धया ।

एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन् ब्रह्माऽकृष्णश्च नोऽवतु नमोऽग्नये १३

प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ।

अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।

ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् १८

गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ।

आहमजानि गर्भधमा त्वमजासि गर्भधम् १९

ता उभौ चतुरः पदः संप्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषा वाजी रेतोधा रेतो दधातु २० १३८०

ऊर्ध्वामेनामुच्छ्रापय गिरौ भारꣳ हरन्निव । अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव २६

ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव । अथास्य मध्यमेजतु शीते वाते पुनन्निव २७

सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे ।

दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ६३ १३८३

॥ २२७ ॥ ( वा० य० २६।१-२ )

अग्निश्च पृथिवी च सन्नते ते मे सं नमतामदो वायुश्चाऽन्तरिक्षं च सन्नते ते मे सं नमतामद आदित्यश्च द्यौश्च सन्नते ते मे सं नमतामद आपश्च वरुणश्च सन्नते ते मे सं नमतामदः ।

सप्त सꣳसदो अष्टमी भूतसाधनी सकामाँ२ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना १

यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।

ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च ।

प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु २ १३८५

अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राय
छागम् ।
सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय छागेन ।
अघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत पुरोडाशेन । त्वामद्य ऋषे २३
देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धयत् ।
द्विपदा छन्दसेन्द्रियं भगमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वेतु यज ४३ १३८७

॥ २२९ ॥ ( वा० य० २९।४७ )

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ४७ १३८८

॥ २३० ॥ ( वा० य० ३२।१५ ) ×

मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा १५ १३८९

॥ २३१ ॥ ( वा० य० ३५।३,११ ) *

वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ।
वि मुच्यन्तामुस्रियाः ३ १३९०
अपाघमप किल्बिषमप कृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःष्वप्न्यं सुव ११ १३९१

॥ २३२ ॥ ( वा० य० ३६।१ )

ऋचं वाचं प्र पद्ये मनो यजुः प्र पद्ये साम प्राणं प्र पद्ये चक्षुः श्रोत्रं प्र पद्ये ।
वागोजः सहौजो मयि प्राणापानौ १ १३९२

॥ २३३ ॥ ( वा० य० ३८।४,१५ )

अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व ।
स्वाहेन्द्रवत् स्वाहेन्द्रवत् स्वाहेन्द्रवत् ४
स्वाहा पूष्णे शरसे स्वाहा ग्रावभ्यः स्वाहा प्रतिरवेभ्यः ।
स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः स्वाहा द्यावापृथिवीभ्यां
स्वाहा विश्वेभ्यो देवेभ्यः १५ १३९४

× वा० य० ३३,५७-५८ = दै० [ अदितिः० ] १९६; सा० ८४७; दै० [ अश्विनौ ] ३ । वा० य० ३४,४६ = दै० [ विश्वे देवाः ] ८०८ ।

* वा० य० ३५,४ = दै० [ आयुर्वेद० ] ३०५ ।

॥ २३४ ॥ ( सा० २९९ )

( १३९५-९७ ) वामदेवो गौतमः । बहुः । बृहती ।

त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।

पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः २९९ १३९५

॥ २३५ ॥ ( सा० ५९१ ) एकपाज्जगती ।

इमं वृषणं कृणुतैकमिन्माम् ५९१ १३९६

॥ २३६ ॥ ( सा० ६११ ) महापङ्क्तिः ।

यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।

यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ।

यशसा३ऽस्याः संसदोऽहं प्रवदिता स्याम् ६११ १३९७

॥ २३७ ॥ ( सा० ३६८ )

( १३९८ ) त्रित आप्त्यः । अनुष्टुप् ।

अमी ये देवा स्थन मध्य आ रोचने दिवः ।

कद्ध ऋतं कदमृतं का प्रत्ना व आहुतिः ३६८ १३९८

॥ २३८ ॥ ( सा० ४४२ )

( १३९९ ) त्रसदस्युः । द्विपदा विराट् ।

सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ४४२ १३९९

॥ २३९ ॥ ( सा० ४५३ )

( १४०० ) कवष ऐलूषः । द्विपदा विराट् ।

वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ४५३ १४००

॥ २४० ॥ ( सा० ४५५ )

( १४०१ ) आत्रेयः । द्विपदा विराट् ।

ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ४५५ १४०१

॥ २४१ ॥ ( सा० १५०३-४ ) *

( १४०२-३ ) अग्निस्तापसः । अनुष्टुप् ।

अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।

ये देवत्रा य आयुषु तेभिर्नो महया गिरः १५०३ १४०२

* सा १५०५ = दै० [ विश्वेदेवाः ] ८११ ।

प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।
तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः १५०४ १४०३

॥ २४२ ॥ ( सा० १८७२ )

( १४०४ ) पायुर्भारद्वाजः । अनुष्टुप् ।

यो नः स्वोऽरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरं शर्म वर्म ममान्तरम् १८७२ १४०४

---

## नानादेवताः ।

॥ २४३ ॥ ( वा० य० ९।२० )

आपये स्वाहा स्वापये स्वाहा ऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहा
ऽहर्पतये स्वाहा ऽह्ने मुग्धाय स्वाहा मुग्धाय वैनंशिनाय स्वाहा
विनंशिन आन्त्यायनाय स्वाहा ऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहा
ऽधिपतये स्वाहा ॥ २० ॥ १४०५-१६

॥ २४४ ॥ ( वा० य० १०।५ )

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा
बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहा ऽंशाय स्वाहा
भगाय स्वाहा ऽर्यम्णे स्वाहा ॥ ५ ॥ १४१७-२८

॥ २४५ ॥ ( वा० य० ११।६०,६५ )

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्व-
दादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद् विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन
छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ६० ॥ १४२९-३५

वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्व-
दादित्यास्त्वाऽऽच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद् विश्वे त्वा देवा वैश्वानरा
आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ६५ ॥ १४३६-३९

॥ २४६ ॥ ( वा० य० १४।२८-३१ )

...त्यास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पति-
...धिपतिरासीत् पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् सप्तभिरस्तुवत सप्त
...र्षयोऽसृज्यन्त धाताऽधिपतिरासीत् ॥२८॥ १४४०-४३

...भिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत ऋतवोऽसृज्यन्तार्तवा अधि-
...त आसँस्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत् पञ्चदशभिरस्तुवत
...त्रमसृज्यतेन्द्रोऽधिपतिरासीत् सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त बृहस्पतिरधिपति-
...सीत् ॥२९॥ १४४४-४८

...दशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्तामेकविꣳशत्यास्तुवतैकशफाः पशवो
...ऽसृज्यन्त वरुणोऽधिपतिरासीत् त्रयोविꣳशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्
...विꣳशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत् सप्तविꣳशत्यास्तुवत द्यावापृथिवी
...तां वसवो रुद्रा आदित्या अनुव्यायँस्त एवाधिपतय आसन् ॥ ३० ॥ १४४९-५३

...विꣳशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेकत्रिꣳशतास्तुवत प्रजा असृज्यन्त
...यावाश्चाधिपतय आसँस्त्रयस्त्रिꣳशतास्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरा-
...त् ॥३१॥ १४५४-५६

॥ २४७ ॥ ( वा० य० १८।१६-१८,२२ )

...श्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे
... च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१६॥
...श्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे
...श्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १७ ॥
...वी च म इन्द्रश्च मे ऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे
...त्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१८॥
...श्च मे घर्मश्च मे ऽर्कश्च मे सूर्यश्च मे प्राणश्च मे ऽश्वमेधश्च मे पृथिवी च मे
...तिश्च मे दितिश्च मे द्यौश्च मे ऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥२२॥
१४५७-८५

॥ २४८ ॥ ( वा० य० २२।५-८,२०,२२-३४ )

प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि
विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि ।
यो अर्वन्तं जिघांसति तमभ्यमीति वरुणः ॥५॥ १४८६-९१
अग्नये स्वाहा सोमाय स्वाहाऽपां मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा
विष्णवे स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा
॥६॥ १४९२-१५०१

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्रोथते स्वाहा
प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा
सन्दिताय स्वाहा वल्गते स्वाहाऽऽसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा
जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा
सꣳहानाय स्वाहोपस्थिताय स्वाहाऽऽयनाय स्वाहा प्रायणाय स्वाहा ॥७॥ १५०२-२५
यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा
निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा
विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा
शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा
यदत्ति तस्मै स्वाहा यत् पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कुर्वते स्वाहा
कृताय स्वाहा ॥८॥ १५२६-५०
काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा स्वाहाऽऽधिमाधीताय स्वाहा मनः
प्रजापतये स्वाहा चित्तं विज्ञातायाऽदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै
सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा
पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा
त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा
विष्णवे शिपिविष्टाय स्वाहा ॥२०॥ १५५१-७१

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो
जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य
यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां १५७२
योगक्षेमो नः कल्पताम् ॥२२॥

...नाय स्वाहा ऽपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा
...चे स्वाहा मनसे स्वाहा ॥२३॥ १५७३-७९

...च्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा
...च्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहो—दीच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहो—
...र्ध्वायै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा ऽवाच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा
...२४॥ १५८०-९१

...भ्यः स्वाहा वार्भ्यः स्वाहो—दकाय स्वाहा तिष्ठन्तीभ्यः स्वाहा स्रवन्तीभ्यः स्वाहा
...न्दमानाभ्यः स्वाहा कूप्याभ्यः स्वाहा सूद्याभ्यः स्वाहा धार्याभ्यः स्वाहा
...वाय स्वाहा समुद्राय स्वाहा सरिराय स्वाहा ॥२५॥ १५९२-१६०३

...नाय स्वाहा धूमाय स्वाहा ऽभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहा
...नयते स्वाहा ऽवस्फूर्जते स्वाहा वर्षते स्वाहा ऽववर्षते स्वाहो—ग्रं वर्षते स्वाहा
...ग्रं वर्षते स्वाहो—द्गृह्णते स्वाहो—द्गृहीताय स्वाहा प्रुष्णते स्वाहा शीकायते स्वाहा
...भ्यः स्वाहा ह्रादुनीभ्यः स्वाहा नीहाराय स्वाहा ॥२६॥ १६०४-२१

...ये स्वाहा सोमाय स्वाहे—न्द्राय स्वाहा पृथिव्यै स्वाहा ऽन्तरिक्षाय स्वाहा
...स्वाहा दिग्भ्यः स्वाहा ऽऽशाभ्यः स्वाहो—र्व्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा
...७॥ १६२२-३१

...भ्यः स्वाहा नक्षत्रियेभ्यः स्वाहा ऽहोरात्रेभ्यः स्वाहा ऽर्धमासेभ्यः स्वाहा
...भ्यः स्वाहा ऋतुभ्यः स्वाहा ऽऽर्तवेभ्यः स्वाहा संवत्सराय स्वाहा
...पृथिवीभ्याँ स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा
...भ्यः स्वाहा रुद्रेभ्यः स्वाहा ऽऽदित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा
...भ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा
...भ्यः स्वाहा फलेभ्यः स्वाहौ—षधीभ्यः स्वाहा ॥२८॥ १६३२-५४

...व्यै स्वाहा ऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा
...त्रेभ्यः स्वाहा ऽद्भ्यः स्वाहौ—षधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा
...रेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥२९॥ १६५५-६६

असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा
गणपतये स्वाहा ऽभिभुवे स्वाहा ऽधिपतये स्वाहा शूषाय स्वाहा
सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा
दिवा पतयते स्वाहा ॥३०॥ १६६७-८०
मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा
नभस्याय स्वाहे—षाय स्वाहो—र्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा
तपसे स्वाहा तपस्याय स्वाहा ऽꣳहसस्पतये स्वाहा ॥३१॥ १६८१-९३
वाजाय स्वाहा प्रसवाय स्वाहा ऽपिजाय स्वाहा क्रतवे स्वाहा स्वः स्वाहा
मूर्ध्ने स्वाहा व्यश्नुविने स्वाहा ऽन्त्याय स्वाहा ऽन्त्याय भौवनाय स्वाहा
भुवनस्य पतये स्वाहा ऽधिपतये स्वाहा प्रजापतये स्वाहा ॥३२॥ १६९४-१७०५
आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहा ऽपानो यज्ञेन कल्पताꣳ स्वाहा
व्यानो यज्ञेन कल्पताꣳ स्वाहो—दानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा
चक्षुर्यज्ञेन कल्पताꣳ स्वाहा श्रोत्रं यज्ञेन कल्पताꣳ स्वाहा वाग्यज्ञेन कल्पताꣳ स्वाहा
मनो यज्ञेन कल्पताꣳ स्वाहा ऽऽत्मा यज्ञेन कल्पताꣳ स्वाहा ब्रह्मा यज्ञेन कल्पताꣳ स्वाहा
ज्योतिर्यज्ञेन कल्पताꣳ स्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा पृष्ठं यज्ञेन कल्पताꣳ स्वाहा
यज्ञो यज्ञेन कल्पताꣳ स्वाहा ॥३३॥ १७०६-११
एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहै—कशताय स्वाहा व्युष्ट्यै स्वाहा
स्वर्गाय स्वाहा ॥३४॥ १७१२-२७

॥ २४९ ॥ ( वा० य० २४।१-४० )

अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे पुरस्तात्
सारस्वती मेष्यधस्ताद्धन्वो—राश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्याꣳ
सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयो—स्त्वाष्ट्रौ लोमशसक्थौ सक्थ्यो—र्वायव्यः श्वेतः पुच्छ
इन्द्राय स्वपस्याय वेह—द्वैष्णवो वामनः ॥१॥ १७२८-३७
रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः
शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः शितिबाहुरन्यतःशितिबाहुः
समन्तशितिबाहुस्ते बार्हस्पत्याः पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥२॥ १७३८-४२
शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये
कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥३॥ १७४३-४७

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः
प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥ ४ ॥ १७४८-५२

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचे ऽविज्ञाता अदित्यै सरूपा धात्रे
वत्सतर्यो देवानां पत्नीभ्यः ॥ ५ ॥ १७५३-५७

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनाᳬं रोहिता रुद्राणाᳬं
श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥ ६ ॥ १७५८-६२

उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः
शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः ॥ ७ ॥ १७६३-६७

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवा वशा मैत्रावरुण्यो
न्यता एन्यो मैत्र्यः ॥ ८ ॥ १७६८-७२

कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः श्वेता वायव्याः अविज्ञाता अदित्यै
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥ ९ ॥ १७७३-७८

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारकाः ॥ १० ॥ १७७९-८३

धूम्रान् वसन्तायालभते श्वेतान् ग्रीष्माय कृष्णान् वर्षाभ्यो ऽरुणाञ्छरदे
पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ ११ ॥ १७८४-८९

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिवत्सा अनुष्टुभे
तुर्यवाह उष्णिहे ॥ १२ ॥ १८९०-९४

पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभे ऽनड्वाहः पङ्क्त्यै
धेनवोऽतिच्छन्दसे ॥ १३ ॥ १९९५-९९

कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः
श्यामाः पौष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥ १४ ॥ १८००-१८०७

उक्ताः सञ्चरा एता ऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥ १५ ॥
१८०८-१८१२

अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यः सान्तपनेभ्यः सवात्यान् मरुद्भ्यो
गृहमेधिभ्यो बष्किहान् मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान् मरुद्भ्यः स्वतवद्भ्यो
ऽनुसृष्टान् ॥ १६ ॥ १८१३-१७

उक्ताः सञ्चरा एता ऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा
बहुरूपा वैश्वकर्मणाः ॥ १७ ॥ १८१८-२१

धूम्रा बभ्रुनीकाशाः पितॄणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां
कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां
कृष्णाः पृषन्तस्त्रैयम्बकाः ॥ १८ ॥ १८२२-२५

उक्ताः सञ्चरा एताः शुनासीरीयाः श्वेता वायव्याः
श्वेताः सौर्याः ॥ १९ ॥ १८२६-२९

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्
वर्षाभ्यस्तित्तिरीं—ञ्छरदे वर्तिका हेमन्ताय ककरा—
—ञ्छिशिराय विककरान् ॥ २० ॥ १८३०-३५

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकां—नद्भ्यो मत्स्यान् मित्राय कुलीपयान्
वरुणाय नाक्रान् ॥ २१ ॥ १८३६-४०

सोमाय हꣳसानालभते वायवे बलाकां इन्द्राग्निभ्यां क्रुञ्चान् मित्राय मद्गून्
वरुणाय चक्रवाकान् ॥ २२ ॥ १८४१-४५

अग्नये कुटरूनालभते वनस्पतिभ्य उलूकां—नग्नीषोमाभ्यां चाषां—नश्विभ्यां मयूरान्
मित्रावरुणाभ्यां कपोतान् ॥ २३ ॥ १८४६-५०

सोमाय लबानालभते त्वष्ट्रे कौलीकान् गोषादीर्देवानां पत्नीभ्यः कुलीका देवजामिभ्यो
ऽग्नये गृहपतये पारुष्णान् ॥ २४ ॥ १८५१-५५

अह्ने पारावतानालभते रात्र्यै सीचापू—रहोरात्रयोः सन्धिभ्यो जतू—र्मासेभ्यो दात्यौहा—
—न्त्संवत्सराय महतः सुपर्णान् ॥ २५ ॥ १८५६-६१

भूम्या आखूनालभते ऽन्तरिक्षाय पाङ्क्त्रान् दिवे कशान् दिग्भ्यो नकुलान्
बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥ १८६२-६६

वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरू—नादित्येभ्यो न्यङ्कून् विश्वेभ्यो देवेभ्यः पृषता—
—न्त्साध्येभ्यः कुलुङ्गान् ॥ २७ ॥ १८६७-७१

ईशानाय परस्वत आलभते मित्राय गौरान् वरुणाय महिषान्
बृहस्पतये गवयाँ—स्त्वष्ट्र उष्ट्रान् ॥ २८ ॥ १८७२-७६

प्रजापतये पुरुषान् हस्तिन आलभते वाचे प्लुषीँ—श्चक्षुषे मशका—
—ञ्छ्रोत्राय भृङ्गाः ॥ २९ ॥ १८७७-८०

प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो
यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहि—दृषभाय गवयी
क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रिमिः समुद्राय शिशुमारो
हिमवते हस्ती ॥ ३० ॥ १८८१-९०

मयुः प्राजापत्य उलो हलिक्ष्णो वृषदꣳ शस्ते धात्रे दिशां कङ्को
धुङ्क्षाऽऽग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥ ३१ ॥
१८९१-९८

सोमाय कुलुङ्ग आरण्योऽजो नकुलः शका ते पौष्णाः क्रोष्टा मायो—रिन्द्रस्य गौरमृगः
पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥ ३२ ॥ १८९९-१९०४

सौरी वलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक्
श्वाविद् भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे
सरस्वते शुकः पुरुषवाक् ॥ ३३ ॥ १९०५-१९१०

सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजो
ऽलज आन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये
द्यावापृथिवीयः कूर्मः ॥ ३४ ॥ १९११-१९१६

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां
कृकवाकुः सावित्रो हꣳसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य
ह्रियै शल्यकः ॥ ३५ ॥ १९१७-२२

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्या
ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥ ३६ ॥ १९२३-२८
अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासां कश्यपो
रोहित् कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥ ३७ ॥ १९२९-३४
वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितृणां बलायाजगरो वसूनां कपिञ्जलः
कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥ ३८ ॥ १९३५-४०
श्वित्र आदित्यानामुष्ट्रो घृणीवान् वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्रः
क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥ ३९ ॥ १९४१-४६
खङ्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः
सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः ॥ ४० ॥
१९४७-५२

॥ २५० ॥ ( वा० य० २५।१-९ )

शादं दद्भिरवकां दन्तमूलैर्मृदं बर्स्वैस्तेगान् दꣳष्ट्राभ्याꣳ सरस्वत्या अग्रजिह्वं
जिह्वाया उत्सादमवक्रन्देन तालु वाजꣳ हनुभ्यामप आस्येन वृषणमाण्डाभ्या-
मादित्याँ श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां विद्युतं कनीनकाभ्याꣳ
शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवो ऽवार्याणि पक्ष्माणि
पार्या इक्षवः ॥१॥ १९५३-७१

वातं प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण प्रकाशेनान्तर-
मनूकाशेन बाह्यं निवेष्यं मूर्ध्ना स्तनयित्नुं निर्बाधेनाऽशनिं मस्तिष्केण
विद्युतं कनीनकाभ्यां कर्णाभ्याꣳ श्रोत्रꣳ श्रोत्राभ्यां कर्णौ तेदनीमधरकण्ठेना-
ऽपः शुष्ककण्ठेन चित्तं मन्याभिरदितिꣳ शीर्ष्णा निर्ऋतिं निर्जर्जल्येन शीर्ष्णा
संक्रोशैः प्राणान् रेष्माणꣳ स्तुपेन ॥२॥ १९७३-९०

मशकान् केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन कूर्माञ्छफै-
राक्रमणꣳ स्थूराभ्यामृक्षलाभिः कपिञ्जलाञ्जवं जङ्घाभ्यामध्वानं बाहुभ्यां
जाम्बीलेनारण्यमग्निमतिरुग्भ्यां पूषणं दोर्भ्यामश्विनावꣳसाभ्याꣳ रुद्रꣳ रोराभ्याम् ॥३॥
१९९१-२००३

